* श्रीजानकीवल्लभोविजयतेतराम् *

॥ श्रीमते हनुमतेनमः ॥

जगद्गुरुवे श्रीमतेभगवते आचार्य्यवर्य्याय
भाष्यकाराय श्री १००८ श्रीस्वामि
श्रीरामानन्दायनमः ।

# श्रीरामस्तवराजभाष्यम्

अखिलतन्त्र स्वतन्त्र प्रतिवादिभीकर श्रीरामानन्दी-
य वैष्णवाचार्य्यवर्य्य श्री १०८ श्रीस्वामिहरिदास
कृतिषु सनत्कुमार संहितान्तर्गतस्य
श्रीरामस्तवराजस्यभाष्यम् ।

सम्वत् १९८६ वै०

॥ श्रीमतेरामानन्दायनमः ॥

श्रीवेदव्यासप्रणीतः

# ॥ श्रीरामस्तवराजः ॥

निखिलशास्त्रनिष्णात श्रीहरिदासकृत
भाष्यसमलङ्कृतः ।

श्रीरामानन्दीयवैष्णवकुलावतंसविद्वद्वर श्री १०८
श्रीयुत पं० रामवल्लभाशरणैः तथा पं० नन्द-
रामदास साहित्यभूषणव्याकरण
वेदान्तशास्त्रिणाचसंशोधितः ।

श्रीमद्धनुमन्निवासि श्रीसीतारामानन्योपासक श्री
१०८श्रीयुतगोमतीदासजीमहाराजकृपाकटा
क्षानुयायि श्रीरामकिशोरशरणीयोत्क-
गठात:कतिपयप्रेमिमहात्मभिः
प्रकाशितः

श्रीसीतारामसुद्रणालये, श्रीअयोध्यायां
गिरिजादयालुनामुद्रितः

सं० १९८६ ] [ प्रति १०००

# भूमिका

सुप्रसिद्धमेतद्यत् किल निखिल जगदुद्दिधीर्षुणा परम कारुणिकेन सर्वज्ञेन भगवता द्वैपायनेन युधिष्ठिरजिज्ञासापूरणाय सनत्कुमार संहितायां द्वाविंशत्यधिकशततमेऽध्याये ब्रह्म-पुत्रप्रवरेण समधिगतपरात्मपरतत्वेन नारदेनोक्तोयं श्रीरामस्तवराजोऽखिलसच्छास्त्रसारभूतः प्रकाशितोऽस्तीति स चाधिगत पदवाक्यस्वरूपयाथाम्यनिखिलशास्त्रविद्भिः परितः परि-चित वेदान्तैः श्रीरामतापिनीयोपनिषत्प्रभृत्यनेकपरमार्थग्रंथ व्याख्यातृभि श्रीमद्रामानन्दीयवैष्णवकुलकैरवकलापकला-नाथैः सकलस्वजनहृदयानन्दसिंधुसंधुक्षणैकदीक्षावद्भिः श्रीहरिदासदैशिकप्रवरैः श्रीरामपरत्वतन्मंत्र माहात्म्यादि बोधकेन भाष्येण समलंकृतस्तमिमं कतिपयश्रीरामोपासकवै-ष्णवप्रवरदत्तसहायतः श्रीरामकिशोरशरणप्रभृतः श्रीनन्द-रामदासप्रभृतिभिर्विद्वद्भिः परिशोध्य मुद्रयामासुरिति विदांकुर्वन्तु निर्मत्सराः सुधियो मोदमुपयान्तु चेति निवेदयति ।

पं० रामवल्लभाशरणः ।

* जगद्गुरु श्रीमद्भगवते रामानन्दायनमः *

* श्रीमज्जानकीवल्लभोविजयतेतराम् *

‡ श्रीमन्मारुतनन्दनायनमः ‡

# श्रीरामस्तवराजम् ।

भाष्यं येन सुभाषितं मतिमता वेदान्तविद्याविदा
विद्याम्भोधिरवातरित्त्रिभुवनाचार्य्येण येनात्र सः ।
मिथ्याब्रह्मवदप्रहारविकलश्रुत्यङ्गरक्षापटु-
रामानन्दयतिः सदा विजयते योगीन्द्रचूड़ामणिः ॥

---

रामं स्वादिगुरुं नत्वा परंब्रह्मसनातनम् ।
द्विभुजं जानकीनाथं सच्चिदानन्दविग्रहम् ॥ १ ॥
परात्परतरं तत्वं सत्यानन्दं चिदात्मकम् ।
ज्ञेयं[1] ध्येयं गतिं गम्यं प्रपन्नानां परां गतिम् ॥ २ ॥
स्वप्राप्यं प्रापकंचैव योगक्षेमकरं तथा ।
विहरंतं सीतयासार्द्धं विभूतिद्वय[2]स्वामिनम् ॥ ३ ॥
सर्वकारणकर्तारं निदानं प्रकृतेः परम् ।
अक्षरं परमंज्योतिः स्वरूपं पुरुषोत्तमम् ॥ ४ ॥

---

टि०—१ ज्ञानिनां ज्ञेयं भक्तानां ध्येयं सर्वेषां साधारणीय-जीवानां गतिं स्वप्राप्तिमुमुक्षूणां गम्यं प्रपन्नानां दासानां परांगतिम् ।

२ परविभूति लीलाविभूतिश्चेति विभूतिद्वयस्वामिनम् ।

नारायणादिरूपत्वात्सर्वावतारिणं हरिम् ।
चिदचित्सर्वव्यापित्वात्सर्वरूपं च निर्मलम् । ५ ॥
सीताश्चादिगुरुं नत्वा चिद्रूपां रामवल्लभाम् ।
श्रीरामसानिध्यवशात्सृष्टिस्थित्यंतकारिणीम् ॥ ६ ॥
समस्तनिगमाचार्यं सीताशिष्यं गुरोर्गुरुम् ।
सर्वविद्याधिनाथंहि हनुमन्तं प्रणम्य च ॥ ७ ॥
भरतं लक्ष्मणं नत्वा शत्रुघ्नं चारिमर्दनम् ।
नत्वानारदव्यासादीन् स्तवराजप्रवर्तकान् ॥ ८ ॥
ये भूता ये भविष्यन्ति ये च सन्ति भूमण्डले ।
श्रीरामानन्यगतयस्तान्नमस्कृत्य यत्नतः ॥ ९ ॥
कथितं ब्रह्मपुत्रेण वेदानां सार मुत्तमम् ।
गुह्याद्गुह्यतमंदिव्यं तवस्नेहात्प्रकीर्तितम् । १० ॥
एवंहिव्यासेनोक्तस्य वेदसारस्यदीपकम् ।
करोमिस्तवराजस्य भाष्यं[१] वेदप्रमाणकम् ॥ ११ ॥
येनस्यात्तत्वविज्ञानां श्रोतृणाश्चदृढ़ा रतिः ।
श्रीरामेजानकीनाथेविभूतिद्वयस्वामिनि ॥ १२ ॥
प्रकृति[२] गुणराहित्यात् ज्ञानादिगुणसागरात् ।
निर्गुणे सगुणे चैव निरवद्ये निरंजने ॥ १३ ॥
प्राकृताकार[३] राहित्वात्सच्चिदानन्द विग्रहात् ।
निराकारे च साकारे स्वप्रपन्नाभयप्रदे ॥ १४ ॥

---

(१) सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः स्वपदानि च वर्ण्यंते भाष्यं भाष्यविदोविदुः ॥

(२) निकृष्टगुणराहितत्वं निर्गुणत्वं तस्मिन्निर्गुणेज्ञानशक्त्यादि-दिव्यगुणत्वं तस्मिन्सगुणे ।

(३ निकृष्टाकार रहितत्वं तस्मिन्निराकारे दिव्यमंगलविग्र-हत्वं साकारत्वं तस्मिन्साकारे ।

निरामये निराभासे ह्यद्वैते तमसः परे ।
विमला चारुशीलादि सखिभिर्नित्यसेविते ॥ १५ ॥
नित्यं सीतया सार्द्धं विभूतिद्वयविहारिणि ।
भूषणैर्विविधैर्दिव्यैर्भूषितांग मनोहरे ॥ १६ ॥
तुलसीकुन्दमन्दार पुष्पमाल्यैरलंकृते ।
रूपं संहननं लक्ष्मींसौकुमार्य्यंसुवेषताम् ॥ १७ ॥
दद्दशुर्विस्मिताकारा यस्यतस्मिन्परात्परे ।
सर्वलोक शरण्ये च अयोध्यावासिमुक्तिदे ॥ १८ ॥
शिवेऽमले गुणातीते रामे परज्योतिर्मये ॥ १८ ॥
श्रुतिस्मृति प्रमाणं च ह्युक्तार्थेदीयते मया ।
येनदृढारती रामे पण्डितानां भविष्यति ॥ १९ ॥
इति रामस्य रामाख्या भुविस्यादथतत्वतः ।
अत्र रामस्य रामाख्या ह्युक्तामहाविष्णोर्मतु ॥ २० ॥
अतोऽनादिः स्वयं रामोह्यवतीर्णोरघोःकुले ।
सहिरामः परं ब्रह्मस्वयंश्रुत्यावगम्यते ॥ २१ ॥
रमन्ते योगिनोनन्ते सत्यानन्दे चिदात्मनि ।
इतिरामपदेनासौ परंब्रह्माभिधीयते ॥ २२ ॥
इत्याद्याः श्रुतयः प्राहू रामं ब्रह्मपरात्परम् ।
रामः स्वयं परब्रह्म तस्माच्छ्रुतिप्रमाणतः ॥ २३ ॥
श्रीरामरामरामेति ह्येतत्तारकमुच्यते ।
अतस्त्वं जानकीनाथ परब्रह्मासिनिश्चितम् ॥ २४ ॥
चैत्रमासे नवम्यांतु शुक्लपक्षे रघूद्वहः ।
प्रादुरासीत्परब्रह्म परब्रह्मैव केवलम् ॥ २५ ॥
तस्माद्रामः परब्रह्मयस्मात्तन्नाम तारकम् ।
इत्याद्याःस्मृतयः प्राहू रामंब्रह्म सनातनम् ॥ २६ ॥

तमुद्दिश्यमयोक्तं यत्सर्वंतदुपपद्यते ।
विभूतिद्वय स्वामित्वं सर्वावतारित्वादिकम् ॥ २७ ॥
परब्रह्मणो रामाख्यादद्वितीयाद्विचारतः ।
तत्समत्वविहीनत्वादन्यस्यनोपपद्यते ॥ २८ ॥
विभूतिद्वयस्वामित्वं सर्वावतारित्वादिकम् ।
रामाख्य ब्रह्मणएव तत्सर्वमुपपद्यते ॥ २९ ॥
यत्परं यद्गुणातीतं यज्ज्योतिरमलं शिवम् ।
तदेव परमंतत्वं कैवल्यपद कारणम् ॥ ३० ॥
श्रीरामेति हि व्यासोपि रामतत्वंपरात्परम् ।
शिवामलगुणातीतपरज्योतिःस्वरूपकम् ॥ ३१ ॥
प्राहयस्मादतोरामः परतत्वं सनातनम् ।
परतत्वे सर्वंघटते सर्वस्वामित्वादिकम् ॥ ३२ ॥
नारायणं जगन्नाथमित्यादिभिर्विशेषणैः ।
विशेष्य राघवंरामंतंहि सर्वावतारिणम् ॥ ३३ ॥
नारदोज्ञापयामास जिज्ञासूनांहितायवै ।
सर्वभूतात्मभूतस्थं सर्वाधारं सनातनम् ॥ ३४ ॥
सर्व कारण कर्तारं निदानं प्रकृतेःपरम् ।
निरामयं निराभासं निरवद्यं निरंजनम् ॥ ३५ ॥
नित्यानन्दं निराकारमद्वैतं तमसः परम् ।
परात्परतरं तत्वं सत्यानन्दं चिदात्मकम् ॥ ३६ ॥
मनसा शिरसानित्यमित्येतैर्हि विशेषणैः ।
विशेष्यराघवं रामंसर्वज्ञोवेदविन्मुनिः ।
निरामयनिराभासादि शब्दानां विशेषतः ॥ ३७ ॥
परतत्वादि शब्दानां वाच्यो रामोऽस्तिनापरः ।
इत्येतंज्ञापयामास जिज्ञासून्प्रति नारदः ॥ ३८ ॥

एवंभूते परेतत्वे रामेहिसर्वरूपिणि ।
पूर्वमुक्तं मयायद्यत्तत्सर्वंघटतेध्रुवम् ॥ ३९ ॥
त्वमक्षरं परंज्योतिस्त्वमेव पुरुषोत्तमः ।
त्वमेवतारकं ब्रह्म त्वत्तोन्यंन्नैव किंचन ॥ ४० ॥
शान्तं सर्वगतंसूक्ष्मं परंब्रह्मसनातनम् ।
राजीव लोचनं रामंप्रणमामि जगत्पतिम् ॥ ४१ ॥
अक्षरादिक शब्दानां वाच्यो रामोऽत्रकीर्तितः ।
अक्षरान्नपरः कश्चिदिति याज्ञवल्क्योऽब्रवीत् ॥ ४२ ॥
बृहदारण्येपृच्छन्ति मैत्रेयींस्वभार्य्यां प्रति ।
रामस्तदक्षरस्त्वस्ति त्वमक्षरमित्युक्तितः ॥ ४३ ॥
वेदोक्त ज्योतिः शब्दस्य वाच्यः सर्वप्रकाशकः ।
रामोऽस्तितत्वं परंज्योतिरित्यस्माद्वचनान्मुनेः ॥ ४४ ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्नपरः कश्चित्साकाष्ठा सा परागतिः ॥ ४५ ॥
इति श्रुत्युक्तः पुरुषोरामोभवतिनापरः ।
त्वमेव पुरुषोत्तम इत्यस्माद्वचनान्मुनेः ॥ ४६ ॥
वेदोक्तं तारकं ब्रह्म रामो भवति नापरः ।
त्वमेव तारकं ब्रह्म चेत्यस्माद्वचनान्मुनेः ॥ ४७ ॥
अक्षरादि पदानां हि वाच्योरामान्नविद्यते ।
त्वत्तोऽन्यन्नास्ति किंचन इत्यस्माद्वचनान्मुनेः ॥ ४८ ॥
श्रुतिभिः यत्परं तत्वं परब्रह्मेति गीयते ।
तदेव साक्षाद्रामोऽस्ति परं ब्रह्म सनातनम् ॥ ४९ ॥
राजीवलोचनं रामं प्रणमामि जगत्पतिम् ।
इति नारद सर्वज्ञ मुनिर्वाक्य प्रमाणतः ॥ ५० ॥

सत्यं सत्यं पुनः सत्यं सत्यमेतदिहोच्यते ।
रामः सत्यं परंब्रह्म रामात्किंचन्नविद्यते ॥ ५१ ॥
एवं त्रिः शपथं कृत्वा व्यासोवेदविदाम्वरः ।
रामः सत्यं परं ब्रह्म रामादन्यन्नविद्यते ॥ ५२ ॥
पर तत्वं पर ब्रह्म ह्येवमाह महामुनिः ।
एवं रामं परं तत्वं परब्रह्मसनातनम् ॥ ५३ ॥
ज्ञात्वा पूर्वं मयोक्तं यत्तत्सर्वं सप्रमाणकम् ।
न परब्रह्मणोऽधिकं तत्वं न तत्समं क्वचित् ।
श्रूयेत्तस्माद्रामोऽस्ति स्वसमाधिकवर्जितः ॥ ५४ ॥
उपक्रमे परं तत्वं श्रीरामेत्यवदन्मुनिः ।
रामः सत्यं परं ब्रह्मेति चोपसंहारेऽवदत् ॥ ५५ ॥
परतत्वं परंब्रह्म पदानामभ्यासोऽपिच ।
दृश्यते स्तवराजेऽस्मिन् सर्वज्ञमुनिनाकृते ॥ ५६ ॥
परं तत्वं परं ब्रह्म रामोरामान्नविद्यते ।
अन्य तत्वं पदं क्वापीत्यपूर्वमपि दृश्यते ॥ ५७ ॥
रमन्ते योगिनोनन्ते सत्यानन्दे चिदात्मनि ।
इतिरामपदे नासौ परं ब्रह्माभिधीयते ॥ ५८ ॥
ॐतत्सद्यत्परंब्रह्म रामइत्येवमादिभिः ।
रामोब्रह्मेत्यपूर्वं यदुक्तं तन्नारदोऽब्रवीत् ॥ ५९ ॥
अत्यन्तापूर्वकथनंस्मृतीनां नोपपद्यते ।
तासांश्रुत्यर्थवादित्वाच्छ्रुत्युक्तं तावदन्ति यत् ॥ ६० ॥
अत्यन्तापूर्वं कथनं वेदानामुपपद्यते ।
परतत्व साक्षाद्ब्रह्मणां न स्मृतीनां कदाचित् ॥ ६१ ॥
स्वतंत्रप्रमाणावेदाअज्ञातार्थस्य ज्ञापनात् ।
तत्प्रमाण प्रमाणाहि ऋष्यादिभिर्विनिर्मिताः ॥ ६२ ॥

वाच्याः स्मृतिपदस्यापि पुराण संहितादयः ।
वेदार्थस्मृतिमद्भिर्हि यस्माद्व्यासादिभिः कृताः ॥ ६३ ॥
फलंचोपक्रमेमुक्ति र्विज्ञानञ्चापि कीर्तितम् ।
उपसंहारे रामतुष्टिर्मुक्तिश्चापि प्रकीर्तिता ॥ ६४ ॥
यस्यनाम परंजाप्यं व्यासेनात्र प्रकीर्तितम् ।
स सर्व मंत्र वाच्येभ्यः परोभवितुमर्हति ॥ ६५ ॥
नारायण जगन्नाथ मित्यादिभिर्विशेषणैः ।
विशेषितोऽसौ रामोऽवतारी भवितुमर्हति ॥ ६६ ॥
निरञ्जनं निराकार मित्यादिभिर्विशेषतः ।
परात्परतरं तत्वं रामोभवितुमर्हति ॥ ६७ ॥
परात्परतरं तत्वं प्रणमामि रघूत्तमम् ।
इत्युक्तेपरतत्वंहि रामोभवितु मर्हति ॥ ६८ ॥
उपपत्तयोपीत्याद्याः ज्ञातव्याहि महाबुधैः ।
वेदार्थोद्दीपकं शास्त्रं प्रमाणं मुनिभिः कृतम् ॥ ६९ ॥
वेदार्थानुवाद रूपः सोऽर्थवादोहि दृश्यते ।
रामस्यस्तवराजेऽस्मिन् ह्येवं लिंगैश्च षड्विधैः ।
रामोहि परमंतत्व मित्येशो निर्णयः कृतः ॥ ७० ॥
उपक्रमोपसंहारावभ्यासोपूर्वता फलम् ।
अर्थवादश्चोपपत्तिर्लिङ्ग तात्पर्य निर्णये ॥ ७१ ॥
एतैर्लिङ्गैर्निर्णीतार्थः परात्परतरोहि यः ।
स रामो न तस्मादन्यः कश्चिद्भवितुमर्हति । ७२ ॥
न तत्समश्चाभ्यधिकश्च दृश्यते ।
न तस्यप्रतिमास्ति यस्य नाम महद्यशः ॥ ७३ ॥
इत्याद्याः श्रुतयः प्राहुर्यस्य नाम महद्यशः ।
न तस्य काप्युपमास्ति न समश्चाधिकस्ततः ॥ ७४ ॥

रामनाम्नो यशस्तुल्यं न कस्यापि नाम्नोयशः ।
अस्त्यतोऽनुपमोरामः स्व समाधिक वर्जितः ॥ ७५ ॥
स्व समाधिक राहित्याद्रामोनुपमेयात्खलु ।
स्वयमेव परं तत्व परं ब्रह्म सनातनम् ॥ ७६ ॥
श्रीरामाय नमोह्येतत्तारकं ब्रह्म संज्ञकम् ।
विष्णोर्नाम्नां सहस्राणां तुल्योह्येष महामनुः ॥ ७७ ॥
अनन्ता भगवन्मंत्रा नानेनतु समाकृताः ।
श्रियोरमण सामर्थ्यात्सौंदर्य्य गुणसागरात ॥ ७८ ॥
इममेवपरंमंत्रं ब्रह्मरुद्रादि देवताः ।
ऋषयश्च महात्मानो जप्त्वामुक्ताभवाम्बुधेः ॥ ७९ ॥
सर्वेषु मन्त्रवर्गेषु श्रेष्ठं वैष्णवमुच्यते ।
गाणपत्येषु शैवेषु शाक्त सौरेष्वभीष्टदम् ॥ ८० ॥
वैष्णवेष्वपि मन्त्रेषु राममन्त्राफलाधिकाः ।
गाणपत्यादि मन्त्रेषु कोटि कोटि गुणाधिकाः ॥ ८१ ॥
सहस्रनाम तातुल्यं राम नाम बरानने ।
बिष्णुरेकैक नामैव सर्ववेदाधिकं मतम् ।
तादृङ् नाम सहस्रैस्तु रामनाम समं मतम् ॥ ८२ ॥
जपतः सर्ववेदांश्च सर्वमन्त्रांश्च पार्वति ।
तस्मात्कोटि गुणं पुण्यं राम नाम्नैव लभ्यते ॥ ८३ ॥
यस्माद्धि भगवत्सर्व नाममंत्र जपात्फलात् ।
कोटि गुणाधिक पुण्यं रामनाम्नैव लभ्यते ॥ ८४ ॥
रामनाम यशस्तस्मान्नामान्तर यशोधिकम् ॥
तस्मान्महद्यशो नामरामनामैव नापरम् ॥ ८५ ॥
तस्मात्कोटि गुणाधिक्यं तद्द्वाच्यस्योपपद्यते ।
नामान्तर वाच्येभ्यो प्रतिमोरामोभवत्यतः ॥ ८६ ॥

तदेवं रामनाम्नः राममन्त्रस्य षडक्षर तारकस्य च गाणपत्य शैव शाक्तसौर सर्वमन्त्रेभ्यः कोटिकोटि गुणाधिक्योक्तेः विष्णवानेक सहस्रनामतुल्यत्वोक्तेश्चभगवदनन्त मन्त्राधिकत्वोक्तेश्च सर्ववेद सर्व मन्त्र जपफलसमूहात्कोटिगुणाधिक फलप्रदत्वोक्तेश्चाशेष गाणपत्य शैवशाक्त सौर मंत्र नामयशोभ्योऽशेष भगवद्विष्णुमंत्रनाम यशोभ्य-श्च राममंत्र नाम यशसः कोटिगुणाधिक्योपपत्तेः श्रुत्युक्तमहद्यशो नाम रामनामैवेति निष्पत्तेस्तद्वाच्यस्य रामस्यैवानुपमेयत्व मतएव स्वसमाधिक रहितत्वश्चोपपद्यते न तदन्यस्य कस्यापि रामनाम सहस्रगुणहीनस्य तत्कोटिगुणन्यून फलप्रदस्य नाम्नस्तद्वाच्यस्य च कुतइति चेत् तत्राह रामनाम्नस्तद्वाच्यस्य च नामान्तरेभ्यस्तद्वा च्येभ्यश्च कोटि कोटि गुणाधिक्य निष्पत्या नामान्तराणां तत्तद्वा-च्यानां चानुपमेयत्व स्व समाभ्यधिक रहितत्वानिष्पत्तेः ॥

शिष्यो हनुमद्दासस्य ह्यनुगामी हनूमतः ।
दासोहं रामचन्द्रस्य हरिदासेति नामकः ॥ १ ॥
शेषोहं रामव्याप्यत्वात्तस्मादपृथक्सिद्धितः ।
अत्यन्तपरतन्त्रत्वात्तदधीन स्वरूपतः ॥ २ ॥
रामएवास्त्युपायोमे स्वप्राप्तेर्नततोऽपरः ।
साध्योपायश्चतद्भक्तिः सिद्धोपायो रामःस्वयम् ॥ ३ ॥
तत्कैंकर्यस्य भोक्ताहं भोग्योहं तस्य वस्तुतः ।
अभयस्तत्प्रपन्नत्वान्निर्भर[1]स्तच्छरीरतः ॥ ४ ॥
तदधीनाप्रवृत्तिर्मे बाह्याभ्यन्तर कर्मसु ।
ते नैवनियुक्तोऽहं यत्कारयति करोमि तत ॥ ५ ॥

---

टि० (१) निर्गतो भारो यस्य स निर्भरः ॥

बहिरन्तरस्तद्व्याप्यत्वात्तस्य[1] तादात्म्यतांगतः ।
तत्तादात्म्यगतत्वाच्च[1] रामोऽहं न ततः पृथक् ॥ ६ ॥
सर्वं समाप्नोषित तोसि सर्वः ।
व्याप्य व्यापकयोरैक्यं कृष्णं प्रत्यर्जुनोऽवदत् ॥ ७ ॥
ब्रह्मैवाहमयमात्मा ब्रह्मेत्येवमादिभिः ।
तत्त्वमसि सर्वं ब्रह्म रामोऽहमित्यादिभिस्तथा ॥ ८ ॥
श्रुतिभीरामरूपत्वं सर्वस्याप्युच्यते यथा ।
तथैव सर्वै मन्तव्यं श्रुति स्मृति प्रमाणकैः ॥ ९ ॥
बहिरन्तस्तद्व्याप्यत्वाद्राममयस्वरूपतः ।
सर्वं ब्रह्मेति श्रुतयः तत्वतः प्रवदन्ति हि ॥ १० ॥
येनैषामेसुधीर्दत्ता वेदसारार्थ बोधिका ।
वेद वेद्यः स्वादि गुरुः स रामः शरणं मम ॥ ११ ॥

अथ वेदान्तैकवेद्यं सर्व निदानं सर्वव्यापकं सर्व नियन्तृ सर्वावतारि स्वभक्तप्रपन्नप्राप्यं तत्प्रापकं च पर विभूति लीलाविभूतीति विभूतिद्वय स्वामिसत्यानन्द गुणकापरिच्छिन्न चित्स्वरूपं परमं तत्वं परंब्रह्म यत्तदेव सच्चिदानन्दार्थकस्य रामपदस्य वाच्यमस्तीति रामतापनीयाश्रुतिराह ॥ "रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि इति रामपदे नासौ परं ब्रह्माभिधीयते" ॥ इत्येषा अत्र यस्मिन्सत्यानन्द स्वरूप समानाकार गुणके अनन्ते अन्तरहिते अपरिच्छिन्ने चिदात्मनि स्वप्रकाश परं ज्योतिः स्वरूपे योगिनो बिषयान्तरेभ्यो मनो

---

टि० (१) किंचिद्भेद सहिष्णुत्वे सतिभेदासहिष्णुत्वं तादात्म्यं तादात्म्यंगतः तादात्म्यगतः तस्य भाव तादात्म्यगतत्वं तस्मात्तादात्म्यगतत्वात ॥

वृत्तिमवरुध्य परतत्वेश्रीरामाख्ये योजनंयोगः सोऽस्ति येषां ते योगिनःरमन्ते सत्यानन्दगुणकचिदात्मारामः ॥ हलन्तादिति सूत्रेणाधिकरणे घ ञ् इति रामपदेन उक्तव्युत्पत्ति निष्पन्ने न सत्यानन्द चिदर्थकेनरामपदेनासौ दाशरथी रामः परं ब्रह्माभिधीयते सर्व निदानंसर्बाधतारीसर्वव्यापकंचिद्घनंपरतत्वमभिधीयते सर्व निदानत्वादीनां परब्रह्मव्यतिरिक्तस्यानुपपत्तेः परंब्रह्माभिधीयते इति परंब्रह्माभिधाने नैवैतत्सर्वमभिहितम्भवति इत्यर्थः अत्र चिदात्मनीति विशेष्यंपदं अनन्ते इतिपदंतु तत्परिच्छिन्नत्वव्यावर्तकत्वेन चित्स्वरूपेजीवेतदतिव्याप्तिनिवर्तकत्वेन च तद्विशेषण भूतं ॥ तथा सत्यानन्दे इतीदमपिपदं तद्विशेषणभूतं चिदात्मनीति पदात्सत्यानन्दपदस्यपृथगुक्तत्वात् सत्यानन्दपदयोस्तद्विनाशित्व दुःखित्वयोर्व्यावर्तकत्वाच्च पुनः सत्यानन्दयोश्चिद्द्रव्य गुणत्वेन चिद्द्रव्यधर्मत्वेनतदाश्रितत्वात्तद्गुणत्वोपपत्तेश्च द्रव्याश्रितत्वं गुणत्वमिति तल्लक्षणात् ॥ ननु सत्यंज्ञानमनन्तं ब्रह्मआनन्दोब्रह्मेत्येवमाद्याः श्रुतयोब्रह्म समानाधिकरण्य निर्देशेन सत्यानन्द पदार्थस्य ब्रह्मस्वरूपत्वंज्ञापयन्तीति चेन्न आनन्दंब्रह्मणोविद्वान्नबिभेति कुतश्चन इतिश्रुत्या आनन्दस्यब्रह्मस्वरूपसम्बन्धित्वदर्शनेन तद्गुणत्वबोधनात् तद्विरोध्यर्थकत्वेनप्रदर्शितश्रुत्योः सत्यानन्दयोः ब्रह्मस्वरूप समानाकार गुणत्वबोधकत्वोपपत्ते रुपपद्यतेहितयो गुणत्वं नतुद्रव्यत्वंतथाहिसत्यत्वमबाधितत्वं सदैकरसविद्यमाणत्वंसत्यपदस्य अस भुवीति धातोर्निष्पन्नत्वात् तेनभूसत्तायां विद्सत्तायामित्यनयोर्धात्वोरेकार्थ्याच्च तच्चविद्यमाणत्वं कमपि द्रव्य विशेषमाश्रित्यतिष्ठति ॥ देवदत्तोऽस्ति देवदत्तोविद्यते इति विद्यमानत्व

---

टि॰ १ चिद्द्रव्यगुणत्वेन

रूपधर्मस्य देवदत्तात्मक द्रव्याश्रितत्वावगमेन देवदत्तगुणत्वागमादेव मानन्दोपिगुणा एवआनन्दत्वं नाम सुखस्वरूपत्वमिति तल्लक्षणात् सुखदुःखयोश्चेतन द्रव्यमाश्रित्य स्वरूपावगमाच्च द्रव्याश्रिततत्वेनत स्यानन्दस्यगुणत्वमेवोपपद्यते । नैयायकैस्सुख दुःखयोर्गुणमध्येगण नाच्चानन्दोऽपि गुणएवनतु द्रव्यंतदनुपपत्तेश्च ॥ तथाहि तदेवदर्श- यतिसत्यानन्दौद्रव्य भूतौ चेत्तर्हि अचिद्रूपौ चिदात्मकौ वा न प्रथमः पक्षःतयोर्जड्त्वेनप्रकृति कार्य्यत्वोपपत्या ब्रह्मस्वरूपेप्रकृतिकार्यत्व वि- कारित्वजड्त्वापत्तेः चित्सहितयोर्तयोर्द्वयोर्ब्रह्मस्वरूपेसमावेशेनब्रह्म- स्वरूपे शंकरत्वापत्तेश्च तत्स्वरूपत्वाङ्गीकारे चिज्जड्त्वापत्तेश्चचि त्व जड्त्वयोः परस्परमत्यन्ताभाव समानाधिकरणयोर्धर्मयोरेकत्र समावेशःशंकरः ॥ इति तल्लक्षणात् ॥ चिदात्मकत्वमपिनोपपद्यते ॥ तयोश्चिद्रूपत्वाङ्गीकारेपक्षेचिदात्मनीति चित्पदस्यपुनरुक्तया वैयर्थ्यापत्तेः ॥ सत्यानंदंचितांसर्वेषां चिद्रूपत्वपक्षे त्रयाणामपि चित्पदवाच्यत्वोपपत्यासा सत्यानन्द पदप्रयोगयोर्वैयर्थ्यापत्तेश्च ॥ सत्यानन्दयोश्चिदात्मनो न्यूनचिद्रूपत्वस्वीकारपक्षेतयोःस्वाधिकचि- दाश्रितत्वोपपत्या तद्गुणत्वोपपत्तेः ॥ किंचक्लप्तकल्पितयोः क्लप्तस्य वलीयस्त्वात् ॥ चिदात्मनीतिक्लप्तेन चित्पदेन कल्पितसत्यानन्द चित्त्वस्यवाधात् न कथं चित्सत्यानन्दयोश्चिद्द्रव्यत्वमतएव ब्रह्म- स्वरूपत्वञ्चोपपद्यते ॥ किंच पृथिव्यप्तेजोवाय्वाकाशकाल दिगात्मम- नांसि नवैवद्रव्याणीत्युक्तेषु नवद्रव्येषु सत्यानन्दयोरगणनात्तयो र्द्रव्यत्वानिष्पत्तेः द्रव्यगुणकर्म सामान्यविशेष समवाया भावाः ॥ सप्तैवपदार्थाः ॥ इत्युक्तेषुसप्तविध पदार्थेषु तयोः सत्यानन्दयोरुत्क्षेप- णाधोक्षेपणाकुंचनप्रसारणगमनत्वाभावेनकर्मत्वानुपपत्तेः॥नित्यमने- कसमवेतं सामान्यमितितल्लक्षणात्॥ ब्रह्मणस्तु एकमेवाद्वितीयं ब्रह्म चिन्मयस्याद्वितीयस्य ब्रह्मणःन तत्समश्चाभ्यधिकश्चदृश्यते ॥ इत्ये

वमादि श्रुतिभिरनेकस्य निषेधात् ॥ सामान्यरूपेणापि सत्यत्वस्य ब्रह्मणि स्थितिर्वाऽनुपपत्तेः । विशेषाणांपरमाणु मात्रस्वरूपविभेदकत्वाङ्गीकारात् ॥ सत्यत्वस्यविशेषत्वानुपपत्तेश्च समवायस्यसंबंध मात्रस्वरूपत्वात् ॥ अभावस्य पदार्थाभावमात्रत्वात् सत्यत्वस्य तदुभयत्वानुपपत्तेश्च परिशेषाद्गुणत्वमेवोपपद्यते ॥ सत्यानन्दयोश्च तु-र्विंशतिगुणेषु गणनानास्तीति चेन्न ॥ तेष्व गणितानां करुणा दया कृपादीनामिवद्रव्याश्रितत्वेनसत्यानन्दत्वयोरपि भगवद्गुणतोपपत्तेः द्रव्याश्रितत्वं गुणत्वमितितल्लक्षणात् ॥ चिदात्मनस्तु आत्ममनां-सिनवैव द्रव्याणीति नवद्रव्यमध्येगणनाद्द्रव्यत्वमुपपद्यते ॥ तस्मा-त्केवलमपरिच्छिन्नचित् द्रव्यमेव परब्रह्मस्वरूप मित्युपपद्यते ॥ चिन्मयेऽस्मिन्महाविष्णविति चिन्मयस्याद्वितीयस्यब्रह्मणः इति धृत्वाध्या-ख्यान निरतश्चिन्मयः परमेश्वरः ॥ इति ॥ रामचन्द्रश्चिदात्मकः इति इत्येवमादिश्रुतिभिर्ब्रह्मणः केवलचिदात्मकत्वोक्तेश्च चिद्द्रव्यात्मकमेव परब्रह्मेति निष्पन्नतरं ॥ तत्स्वरूप समानाकारौ तद्गुणभूतावेवसत्यानन्दावित्यपि निर्बाधं सिद्धमिति ॥ प्राप्तस्य प्रतिषेधेऽन्यत्रा प्रसंगा-त्परिशिष्य माणेसम्प्रत्ययः परिशेषः ॥ इतीदंपरिशेषानुमानस्य लक्ष-णंज्ञेयं ॥ यद्वीदंरमन्ते योगिन इत्यनयाश्रुत्याभिहितं रामाख्यंपरंब्रह्म तदेवतत्तदुपासक कार्य्यार्थंद्विभुजादि सहस्र बाहुंत विष्णु नारायण मत्स्यकूर्म वराहादि सहस्रबाहु विश्वरूपानन्त रूपोभवतीत्याहुस्तदन-न्तर तनाश्रुतयः ॥ चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां कार्य्यार्थं ब्रह्मणोरूप कल्पना ॥ रूपस्थानां देवतानांपुंस्त्र्यंङ्गास्त्रादिकल्पना द्विचत्वारि षडष्टासांदश द्वादश षोडश अष्टादशामी कथिता हस्ताः शंखादिभिर्युताः ॥ सहस्रान्तास्तथातासां वर्ण वाहन कल्पना ॥ शक्तिसेना कल्पना च ब्रह्मण्येवंहिपंचधा ॥ कल्पितस्यश-रीरस्य तस्यसेनादि कल्पनेत्येतदन्ताः ॥ यच्चानया श्रुत्या रामाख्य ब्रह्मणो विष्णवादिरूपित्वंज्ञापितंतदेवरामतापनीयोपसंहारमंत्राःप्रका-शयामासुः ॥ ॐ यो वै श्रीरामचन्द्रः सभगवान्यत्परं ब्रह्मभूर्भुवः स्व-

स्तस्मैवैनमोनमः ॥ ॐयो वै श्रीरामःसब्रह्माविष्णुरीश्वरःवासुदेवोमहा विष्णुर्यो ब्रह्माण्डस्यबहिरतर्व्याप्नोतियोवैविराडित्यादयः सप्तचत्वा-रिंशत्संख्याकाः॥ यच्च तस्य परस्यब्रह्मणोवाचकं रामपद तत्स्वप्रका-शज्योतिः स्वरूपमस्त्यतो ब्रह्मात्मकं प्रणव कारणंचेत्याह ॥ रामपूर्व तापनीयाश्रुतिः। स्वभूर्ज्योतिर्मयोऽनन्त रूपीस्वेनैव भासते॥ जीवत्वे नेदमोंयस्य सृष्टिस्थितिलयस्य च॥ कारणत्वेन चिच्छक्त्याः रजः सत्वतमोगुणैरित्येषा॥ तत्रजीवत्वेनेदमोंयस्येत्येषः पादः वह्निबीज-स्यप्रणवकारणत्वं वोधयति॥ शब्दशास्त्रेणापितन्निष्पद्यते ॥ तथाहि रामइत्येवंवह्निबीजस्य वर्ण विश्लेषं कृत्वा पश्चाच्छन्दसिदृष्टानुविधि रितिसूत्रेणमध्याद्वितीयाकारस्य उकारंकृत्वापश्चात् ॥ आद्गुणः। इति सूत्रेण ओंकार कृत्वारेफमोंकारस्योपर्य्यानीयार्द्ध मात्राकारेण स्थापयित्वा तन्मध्ये मकारात्मकं बिन्दुं स्थापयेदित्येवं वह्निबीजादों-कारस्य सिद्धिर्भवति॥ ब्रह्मात्मकाः सच्चिदानन्दाख्या इत्युपासित व्यमित्येषारामोत्तर तापनीया श्रुतिः ॥ षडक्षर रामतारक मंत्रस्य सच्चिदानन्दब्रह्मस्वरूपत्वंवदति ॥ तदेवषडक्षरं तारकं ॐकार रूपत्वं प्राप्नोतीत्याह तदनन्तर तना श्रुतिः ॥ इत्योमितीत्येषाइत्थों इत्युक्त प्रकारकं षडक्षर तारकं ओं ओंकाराक्षरं भवति॥ नह्येतस्मादोंका-रोऽन्य ओंकारादेतत्तारकमन्यदित्यर्थः॥ तदेव षडक्षरंगर्भजन्मादिभ्य-स्तारकत्वात्तारकेतिसंज्ञांप्राप्तवदित्याह॥ गर्भजन्म जरामरण संसार महद्भयाद्यस्मात्तारयतीति तस्मादुच्यते तारक मित्येषाश्रुतिः॥ यएत-त्तारकंनित्यंजपति सवर्तमानस्यैव देहस्यान्तेऽमृतीभूत्वाश्रीरामंप्राप्नो तीतीमर्थं ज्ञापयति तदनन्तर तनाश्रुतिः। य एतत्तारकं ब्राह्मणो नित्यमधीतेस पाप्मानं तरति। स मृत्युं तरति, स भ्रूणहत्यां तरति स ब्रह्महत्यां तरति। स वीरहत्यां तरति। स सर्वहत्यां तरति। स संसारं तरति। ससर्वंतरतिसोविमुक्तमाश्रितोभवति। समहान्भवति सोऽमृतत्वं च गच्छतिअमृतत्वं च गच्छतीति। कथंतारक जपपरस्य प्रारब्धकर्म भोगांते श्रीरामप्राप्तिर्भवतीति चेदुच्यते॥ नायंनरकंगमि-

ष्यति। न च पुनः पुनः जन्ममरणरूपां मशकादियोनिंगमिष्यति। न च जायस्वम्रियस्वेति छांदोग्योक्तांतृतीयां गतिंप्राप्स्यतितद्धेतुभूत सर्वपापरहितत्वादिति ज्ञापयति ॥ सपाप्मानतरतीत्येषाश्रुतिः। न चायंधूममार्गेण ब्रह्माण्डान्तर्वर्तिनि कस्मिंश्चित्स्वर्गादिलोकेगमिष्यति ब्रह्माण्डाद्बहिर्गन्तृत्वादिति ज्ञापयति। ससंसारं तरतीत्येषा न चायं ब्रह्माण्डाद्बहिः परंपदादधोलोके यास्यतीति ज्ञापयति। स सर्वं तरतीत्येषा किन्तु परिशेषा त्रिपाद विभूतिं गत्वा सर्वदास्मृतं ॥ श्रीरामंपश्यतीति ज्ञापयति । सोऽमृतत्वं च गच्छतीत्येषा अमृतत्वं नामसंसारोच्छेदपूर्विका श्रीरामप्राप्तिः। इममेवार्थंस्फुटयामासतापिनीये श्रीमुखेन श्रीरामः शिवंप्रति। त्वत्तोवा ब्रह्मणोवापि येलभन्तेषडक्षरम्। जीवन्तो मंत्रसिद्धाःस्युरन्ते मां प्राप्नुवन्तिते इति। यश्चतापनीय चरममन्त्रैर्नित्यं श्रीरामंस्तौति सोऽपि श्रीरामंप्राप्नोतीत्याह ॥ तापनीयान्तिमोमंत्रः य एतैः सप्तचत्वारिंशन्मन्त्रैर्नित्यं देवंस्तौति तस्य रामः प्रीतोभवति स देवं पश्यति इत्यादिः योऽयंतापनीयोपनिषत्सारार्थः उक्तोमया स सर्वासामुपनिषदांसारार्थोज्ञेयः निरपेक्षस्वरूपयारामतापनीयोपनिषदा सहसर्वासामुपनिषदामेकवाक्यता योग्यात् ॥ कुत इति चेत् ॥ सर्वासामुपनिषदां परब्रह्मक परत्वात् ॥ न तत्समश्चाभ्यधिकश्चच दृश्यते ॥ नतस्य प्रतिमास्ति यस्य नाम महद्यशः। एकमेवाद्वितीयं ब्रह्मचिन्मयाद्वितीयस्य ब्रह्मणोरूपकल्पनेत्येवमादिश्रुतिभिः परब्रह्मव्यतिरिक्तस्य तत्समत्वतदधिकत्वनिषेधेनोपनिषदांपरब्रह्मन्यूनवस्तुपरत्वानुपपत्तेरिति योह्ययं सर्वोपनिषत्सारार्थ उक्तोमया स एव रामस्तवराजरूपेणप्रकटीकृतः। सर्वज्ञेन श्री नारदेनेति। कथितं ब्रह्मपुत्रेण वेदानां सारमुत्तमम्। गुह्याद्गुह्यतमं दिव्यं तवस्नेहात्प्रकीर्तितम् इत्यस्माद्वेदव्यासवचनादवगम्यते ॥ तस्मादस्याशेष वेदसारार्थभूतस्य श्रीरामस्तवराजस्य श्रवणाद्विचारणात्तदर्थस्य मननान्निदिध्यासनाच्च तत्प्रतिपाद्यस्य सत्यानन्द गुणकापरिच्छिन्नचिज्ज्योतिः स्वप्रकाशस्वरूपस्य रामाख्यस्य परस्य

ब्रह्मणोदिव्यमपरोक्षं ज्ञानमुपपद्यते ॥ ततश्चतत्प्राप्तिरित्यतः परमतत्व जिज्ञासुभिस्तत्प्राप्तिकामैर्मुमुक्षुभिरयमेव स्तवराजस्तत्प्रतिपाद्यश्च परतत्वपरब्रह्मचित्स्वप्रकाशपरज्योतिः स्वरूपः श्रीरामश्च श्रोतव्योम- न्तव्योनिदिध्यासितव्योद्रष्टव्यः प्राप्तव्यश्चेति पूर्वोक्तवाक्यसमुदाय स्यफलितोऽर्थः ॥

नारदव्यासमूतादीन् परतत्वप्रकाशकान् ।
पृच्छकान्धर्मपुत्रादीन् प्रणमामि पुनः पुनः ॥ १ ॥
व्यासवाक्यमनादृत्य रामंतत्वं परात्परं ।
मन्यते यो न दुर्बुद्धिर्नास्तिकः कोपरस्ततः ॥ २ ॥
तारकादपरं मन्त्रं गर्भजन्मादितारकम् ।
मन्यते योऽपदार्थज्ञः गतानुगति को हि सः ॥ ३ ॥
सह स्त्रनाम तातुल्यं रामनामपरात्परम् ।
हित्वाभजतिनामान्यद्वालिशः कोऽपरस्ततः ॥ ४ ॥
श्रुतिस्मृतिप्रमाणार्थ एषः प्रकाशितोमया ।
सुखदस्तत्वविज्ञानामविदां दुःखदायकः ॥ ५ ॥

अथ सोऽयंसर्वशास्त्रार्थतत्वज्ञमुनीश्वरश्रीमद्वेदव्याससमधिगतं परमार्थवस्तुयाथात्म्यः श्रीमान्सूतः श्रीरामस्वरूपरूपगुणनामलीला विभूति याथात्म्य प्रकाशकं स्तवराजं वक्ष्यन्नादौ तस्यर्ष्यादिकं दर्शयति ॥

## ॐअस्यश्रीरामस्तवराजमन्त्रस्य सनत्कुमारऋषि- रनुष्टुपछन्दः श्रीरामोदेवताश्रीसीतावीजं हनु- मान्शक्तिः श्रीरामप्रीत्यर्थेजपेविनियोगः ॥ १ ॥

ओमस्येति ॥ अस्यश्रीरामस्तवराजत्मक मंत्रस्य स्वमननकर्तृ रक्षकस्यमन्तारमनुसंधातारं त्रायतेरक्षतीतिमंत्रइतिनिरुक्तेः । मननान् त्राणणान्मन्त्रः । इतिरामतापिनीयश्रुतेश्च सनत्कुमारो ऋषिः प्रकाशक

अनुष्टुप्छन्दः अनुष्टविति तत्प्राचुर्य्यादुक्तं । भूम्नाहि[1]व्यपदेशाभवन्ती-त्युक्तेः । प्राधान्यात्तद्वादस्तद्वाद इतिव्याससूत्राच्च। देवताप्रतिपाद्यः । सीताबीजंमूलकारणं । श्रीरामचरितमात्रस्य तच्चरितस्य श्रीरामायणस्य च सीताबीजत्वात् । काव्यंरामायणं कृत्स्नंसीतायाश्चरितमहत् इतिवचनात् ॥ हनुमांस्तुतस्यशक्तिर्बलं । यद्वा अघटितघटनापटीयसी शक्तिरितिशक्तिलक्षणात् ॥ तत्प्राचुर्य्यादयं[2] तादात्मकत्वनिर्देशः ॥ तस्मादेवहेतोरलंघ्य जलधिलंघन सीतान्वेषण लंकादहनसेतुनिर्माण महौषधाहरणानेकरक्षोवधादि चरितसिद्धेः । तथैवोक्तं श्रीरामेण ॥ न कालस्य न शक्रस्य न विष्णोर्वित्तपस्यच । कर्माणितानि श्रूयन्ते यानि युद्धेहनूमतः ॥इति । अत्रर्ष्यादिकथनंमस्तकाद्यङ्गेषु तन्न्यासार्थं तदुक्तं मंत्रमहोदधिसंज्ञकेतन्त्रे ॥ ऋषीन् शिरसि वक्त्रे तु छन्दांसिहृदि देवतां ॥ गुह्येबीजंपदोःशक्तिं सर्वाङ्गेकीलकं न्यसेत् ॥ इति ॥ तत्प्रयोगस्त्वीदृशः ॥ सनत्कुमारर्षयेनमःशिरसि अनुष्टुप्छन्दसेनमोमुखे श्रीराम देवतायैनमोहृदि सीताबीजायनमोगुह्ये हनुमच्छक्तयेनमःपादयोः स्तवराजकीलकायनमःसर्वाङ्गे ॥ उपलक्षणं हि ऋष्यादिन्यासः ॥ करन्यासहृदयादिन्यासादीनां षड्दीर्घ युक्तेन बीजेनकरन्यासादिस्तन्त्रशास्त्रसंमतः ॥ अत्रहि सीताबीजमित्युक्तेसीताबीजेन राममन्त्रबीजसहितेनवासीतामंत्रबीजेनकरन्यासादिःकर्त्तव्यः । तद्यथा । रांश्रांअंगुष्ठा

---

टि० (१) बहोर्भावोभूमातेनभूम्ना "बहो" बहोर्ष्ठि लोपभूलोपश्चेति सूत्रात्भूम्ना बहुलप्रकारेन व्यपदेशाः नामानिभवन्ति यथाब्राह्मणाः गच्छन्ति न तत्र केवल ब्राह्मणाः सन्ति किन्तु ब्राह्मणबहुलत्वाद्ब्राह्मणव्यपदेशोभवति ।

(२) तत्प्राचुर्य्यात् । तस्यहनुमतःशक्तेः प्राचुर्य्यादाधिक्यात्तद्रात्मकत्व निर्देशः अतिशयेन शक्तिः विद्यते अस्मिन्निति शक्तिमानितिनिरुक्तेः ॥

भ्यांनमः। रींश्रीं तर्जनीभ्यांनमः। रूंश्रूं मध्यमाभ्यांनमः। रैंश्रैं अना-
•मिकाभ्यांनमः। रौं श्रौं कनिष्ठिकाभ्यांनमः। रःश्रः करतलकरपृष्ठाभ्यां
नमः। इतिकरन्यासः। अथहृदयादिन्यासः। रांश्रां हृदयायनमः।
रींश्रीं शिरसे स्वाहा। रूंश्रूं शिखायैवषट्। रैंश्रैंकवचायहुं। रौंश्रौंनेत्रा-
भ्यांवौषट्। रःश्रः अस्त्रायफट्। एवमृष्यादिन्यासान्कृत्वाऽनन्तरं।
अयोध्यानगरे रम्येरत्नमण्डप मध्यगे इत्यादिना एवंसंचितयेद्विष्णुं
यज्ज्योतिरमलं शिवमित्यन्तेनोक्त प्रकारेण वैदेहीसहितं सुरद्रुमतले-
हैमेमहामण्डपे॥ इत्यादिनाब्रह्मारामाभिधानमित्यन्तेनोक्तप्रकारेण
वा सीतासहितं श्रीरामंध्यात्वा तदनन्तरं षट्सहस्रमष्टोत्तर
सहस्रं वा अष्टोत्तरशतं वा यथाशक्ति षडक्षरतारकसंज्ञकमन्त्रजपं
कृत्वा तदनन्तरं रामस्तवराजेन श्रीरामं प्रस्तूयपश्चात्तस्मै
जपादींश्च सम्यक् समर्पयेति रामतापनीयश्रुतेः। समर्पण मन्त्रै-
र्वक्ष्यमाणैः। साधु वा साधु वा कर्मयद्यदाचरितं मया। तत्सर्वं भग-
वन्रामगृहाणास्मत्कृतंजपम्।गुह्यातिगुह्यस्यगोप्तात्वंगृहाणास्मत्कृतंजपं
सिद्धिर्भवतुमेदेवत्वत्प्रसादात्कृपानिधेरित्यादिभिः। अतः परं प्राणबु-
द्धिमनोदेहाधिकारतः जाग्रत्स्वप्नसुषुप्त्यवस्था सुमनसावाचाकर्मणा
हस्ताभ्यांपद्भ्यांउदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वंब्रह्मार्पण
मस्तुस्वाहेत्यनेनमन्त्रमहोदध्युक्तेन ब्रह्मसमर्पणमन्त्रेण च मांमदीयं च
सकलंश्रीरामचन्द्रायसमर्पयामि। ॐ तत्सदात्मानं श्रीरामचन्द्राय"
समर्पयामीत्यादिभिर्वचनैश्च मन्त्रजपादिफलमात्मानमात्मीयं च सर्वं
श्रीरामं समर्प्य तदनन्तरं जपासनादुत्थाय सीतारामस्थानं गत्वा
यथाधिकारं तयोः पूजनं कृत्वा तदकृत्वा वा करबद्धांजलिपुटं दीनंया-
चन्तं शरणागतमितिकण्डूक्तप्रकारेणाञ्जलिपुटं बद्ध्वादीनश्च भूत्वा
तत्सन्मुखमास्थाय॥ संसार सागरान्नाथौपुत्रमित्र गृहात्कुलात्।
गोप्तारौ मे दयासिन्धू प्रपन्नभयभंजनौ॥ १॥ योऽहं ममास्ति यत्किं-
ञ्चिदिहलोके परत्रचतत्सर्वं भवतोरेव चरणेषु समर्पितम्॥ २॥
अहमस्म्यपराधीनां मालयस्त्यक्तसाधनः। अगतिश्च ततो नाथौ

भवन्तावेवमेगती ॥ ३ ॥ तवास्मि जानकी कान्त कर्मणा मनसागिरा रामकान्ते तवैवास्मि युवामेव गतीमम॥४॥शरणंवाप्रपन्नोऽस्मिकरुणा-निकराकरौ। प्रसादंकुरुतांदासेमयि दुष्टेऽपराधिनि।५। मत्समोनास्ति पापात्मात्वत्समोनास्ति पापहा। इतिसंचिंत्यदेवेश यथेच्छसितथा कुरु ॥ ६ ॥ अन्यथाहि गतिर्नास्ति भवन्तौहिगतीमम। तस्मात्कारुण्य भावेन कृपांकुरुकृपानिधे ॥ ७ ॥ दासोऽहंशेषभूतोऽहंतवैवशरणंगतोऽ[१]पराधितोहंदीनोहंपाहिमां करुणाकर ॥८॥ इत्येतैरष्टभिः पंचरात्रोक्त-शरणागतिपरवचनैरात्मरक्षां प्रार्थयेत्। अवशिष्टं कालन्तुसीतारा-मेत्यनयोर्नाम्नोरुच्चारणेन क्षिपेत् ॥ एवमुक्त प्रकारेणवर्तमानस्य यस्य कस्यापि देहान्ते श्रीरामप्राप्तिरवश्यंभविष्यतीति ॥ तारकंब्रह्मसंज्ञकं तेषां मुक्तिश्च भुक्तिश्च भविष्यति नसंशयः। विज्ञानफलदंदिव्यं मोक्षै-क फल साधनं। इतिश्रीरघुनाथस्यस्तवराजमनुत्तमं। सर्वसौभाग्य संपत्तिदायकंमुक्तिदं शुभमित्येतैः श्रीराममन्त्रनामध्यानस्तवराज फलसंसार मुक्तिज्ञापकैरत्नत्यैर्वचनैरवगम्यते ॥ तत्रमन्त्रनामस्तव राजाणांमध्ये एकैकावलम्बकस्यमुक्त्युक्तेः कैमुत्यन्यायेनमन्त्रादिसम-स्तावलम्बकस्य प्रारब्धावसाने श्रीरामप्राप्तिर्निःसंशयमुपपद्यते॥ १ ॥

॥ सूतोवाच ॥

सर्वशास्त्रार्थतत्वज्ञं व्यासं सत्यवतीसुतम्।
धर्मपुत्रः प्रहृष्टात्माप्रत्युवाचमुनीश्वरम् ॥२॥

॥ युधिष्ठरोवाच ॥

भगवन्योगिनां श्रेष्ठ सर्वशास्त्रविशारद।
किंतत्वंकिंपरंजाप्यंकिंध्यानंमुक्तिसाधनम्॥३॥

---

टि० (१) पराधितो नाम अपराधितः। अत्रअकारस्य लोपः तदुक्तं भागुरिणा, वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हलन्तानां यथा वाचानिशादिशा॥ इति ॥ १ ॥

अथास्य स्तवराजस्य प्रादुर्भावव्यक्तये श्रीव्यास युधिष्ठिर संवादमवतारयति सूतइत्यादिना ॥ धर्मपुत्रोयुधिष्ठिरो मुनीश्वरं व्यासमुवाचेत्यन्वयः। कीदृशंव्यासं सर्वशास्त्रार्थ तत्वज्ञं ॥ सर्वेषां शास्त्राणांतत्वं याथात्म्यं जानातीति तथोक्तस्तम् ॥ यःखलुसांख्यादि शास्त्रार्थान्पूर्वपक्षान् विधाय श्रीरामस्वरूपमेव वेदान्तार्थं सिद्धान्त-यामास ॥ मुनीश्वरं सर्वमुनिस्वामिनं तद्देशिकमित्यर्थः ॥ अनेन तन्म-तस्योपादेयत्वं व्यक्तीकृतम्। प्रहृष्टात्मेति। तद्विज्ञानार्थं सगुरुमेवाभि गच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्यादि श्रुत्युदितोगुरुर्लोके दुर्लभो ममभाग्य वशाल्लब्धोऽतः सर्वसंशय निवृत्ति पूर्विकाममेष्टा-वाप्ति र्भविष्यतीति कृत्वा प्रष्टव्यार्थे रुचिनिर्भरत्वाद्भाति हृष्टमनाः। हे योगिनांश्रेष्ठ । प्राकृतवाह्य विषयेभ्यश्चित्तवृत्तिंनिरुध्यपरतत्वे तन्नियोगः योगः सोऽस्ति येषां तेयोगिनस्तेषां श्रेष्ठसम्यग्दृष्ट पर-तत्व इत्यर्थः। अनेन तस्य परब्रह्म निष्ठत्वं ज्ञापितम् ॥ सर्वेषु वेदा-दिषु शास्त्रेषुविशारदनिपुणेत्यनेन तस्य शब्द ब्रह्मपारगत्व दर्शितम् ॥ तदेवं व्यासस्य परब्रह्मशब्द ब्रह्मनिष्णातत्वं प्रदर्श्याथश्रुत सकलवेद शास्त्रार्थो धर्मिष्टाग्रगण्यो महाराजोयुधिष्ठिरः ॥ तत्रतत्र शास्त्रेषु सर्वकारणतत्वस्य ध्येयत्वंज्ञेयत्वंस्वभक्तमोक्षप्रदत्वं च श्रुत्वाक्वचिच्छे-ताश्वतराद्यासूपनिषत्सुपुराणादिषुच शिवरुद्रप्रजापत्यादिशब्दवाच्य-स्यक्वचिन्निरंजन निराकारादि शब्दवाच्यस्यक्वचिद्विष्णुनारायण वासुदेव हरि नृसिंह कृष्णादिशब्दवाच्यानां नित्यत्वं सर्वकारणत्वं श्रुत्वातेषां मध्ये एकस्य सर्वोत्कृष्टतत्वंज्ञातुमशक्नुवन् ॥ तत्तद्वाचका-नां मन्त्राणां च सर्वपापनिरसनपूर्वक स्वस्वभक्तमोक्षप्रदत्वेनोक्तानां मध्येकोमंत्रःसर्वोत्कृष्ट इति च भगवत्स्वरूपावताराणां मध्येकिंसर्वो-त्कृष्टं स्वध्यानेनमुक्तिप्रदमिति च ज्ञातुमसमर्थस्सन्। तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं तस्मै प्रशान्त चित्ताय सविद्वान्प्रोवाच तां तत्वतोब्रह्मविद्यां येनाक्षरं पुरुषंवेदेति। आचार्य्यवान्पुरुषोवेदेति चैवमादिश्रुत्युक्तं श्रोत्रियं ब्रह्मनिष्ठं गरु

ज्यासंज्ञात्वा ज्ञेयंपृच्छति । किंतत्त्वंकिंपरंजाप्यं किंध्यानं मुक्तिसाधन मिति । अत्रपरमिति जाप्यपदविशेषणंदेहलीदीपकन्यायेनतत्वपदेन ध्यानपदेन चान्वेति । परजाप्यवाच्यस्य परतत्वत्वोपपत्तेः परजाप्यवाच्यध्यानस्य परध्यानत्वोपपत्तेश्च अस्योत्तरवाक्ये तदेवपरमं तत्वमितिपरमपदविशेषितस्यैव तत्वपदस्य श्रवणाच्च परतत्वध्यानस्यपरध्यानत्वोपपत्तेश्च तथामुक्तिसाधनमिति पदमपिकाकाक्षीगोलकन्यायेनतत्वपदेन परजाप्यपदेन चान्वेतितत्तदुत्तरवचने कैवल्य पदकारणमितिपरतत्वस्य तारकमिति परजाप्यस्य च मुक्तिसाधनत्वश्रवणात् ॥ किंपरंतत्वं तत्रतत्रतत्वपदेनोक्तानांमध्ये परं तत्वंकिं परमार्थभूतंसर्वोत्कृष्ट सर्वमूलमनादितत्वं किमस्तिइत्यर्थः । किंपरं जाप्य सर्वजाप्येषुमंत्रेषु मध्येपरंसर्वोत्कृष्टं जाप्यंकिमस्तीत्यर्थः । किं परंध्यानंसर्वशास्त्रोक्तसर्वध्यानेषुसर्वोत्कृष्टंध्यानंकिमस्तीत्यर्थः। मुक्तिः संसारछेदपूर्विकाश्रीरामपदप्राप्तिस्तस्याःसाधनमुपायभूतंकिंध्यानम् । कीदृशतयाध्यातं तत्परं तत्वंमुक्तिंददातीत्यर्थः । एवं युधिष्ठिरेणपृथक्पृथक्कृत्यपरदेवता परमन्त्रपरध्यानानि पृष्टानि । तत्रपरतत्वपर जाप्यपरध्यानेष्वन्यतरविषयकेन[1] प्रश्नेनैकस्यैव सर्वोत्कृष्टत्वे ज्ञाते सतितत्संबन्धिनोरवशिष्टयोर्द्वयोरपिपरत्वज्ञानोपपत्तेःपृथक् पृथक्प्रत्येक परत्वज्ञानविषयःप्रश्नः किमर्थमितिचेदुच्यते वाच्यस्वरूपज्ञानंविना तद्वाचकध्यानयोःप्रश्नानुपपत्तेःप्रथमंकिंतत्वमितिपृष्टम् । तत्रापिपरतत्वस्यबहुरूपधारित्वेनानेकशब्दवाच्यत्वोपपत्तेस्तेषुतदनेकवाचकेष्व परिछिन्नचित्स्वरूपसाक्षाद्वाचकत्वेन तन्मुख्यंवाचकं किमस्तीति निर्धारणाय किं परंजाप्यमिति द्वितीयः प्रश्नः । तत्रापि तत्परतत्वं निरवयवंसावयवंवा निराकारं चेत्तर्हिकथंध्येयं साकारं चेत्तर्हि

---

टि० (१) अन्यतर विषयकेणकोऽर्थः परतत्व परजाप्य परध्यानानां मध्ये एकस्यैव प्रश्नेन ॥ १ ॥

तद्बहुधाविग्रहाणां निदानभूतोऽनादिविग्रहः कः कीदृशः किंप्रकारेण च ध्येयइत्येतज्ज्ञानाय किंपरंध्यानमितितृतीयःप्रश्नः। इत्यवगम्यते ३॥

श्रोतुमिच्छामितत्सर्वं ब्रूहिमेमुनिसत्तम।

श्रीव्यासउवाच।

धर्मपुत्रमहाभाग शृणुवक्ष्यामितत्वतः ॥४॥

श्रोतुमिति। एतत्सर्वंश्रोतुमिच्छामिमांप्रति तत्सर्वंब्रूहि। इति प्रोत्साहितो व्यासआह॥ धर्मेति। हे धर्मपुत्रेति हे महाभागेति ईदृशानामेवपरतत्वजिज्ञासा भवेन्नान्येषामितिभावः॥ यत्परंतत्वं परंजाप्यंपरंध्यानं च तत्वतोयाथार्थ्येन वक्ष्यामिस्पष्टं वदिष्यामीति प्रतिज्ञातम्॥ ब्रूञ्व्यक्तायांवाचीति धातुसूत्रात् ब्रूवो व्यक्तार्थ वाचकत्वावगमात् त्वंशृणुवति। सावधानतयाधारणं कुरु। अत्रतत्वतोवक्ष्यामीत्यस्यायमभिप्रायः। तत्तद्ग्रन्थेषु तत्तद्ग्रन्थकारैस्तत्तद्ग्रन्थाधिष्ठातृत्वेन हेत्वंतरेण च कारणकार्य्ययोरभेददृष्ट्या च तत्रतत्र तत्तद्भगवद्विग्रहस्य परमकारणत्वं निर्दिष्टं[1]॥ पुनः तत्तदुपासकाः गुणातीतपरज्योतिः परपुरुषनिर्मलशिवादिकाः परतत्वपर्य्यवसिताः परतत्वस्यसर्वोत्कृष्टतत्वबोधका ये शब्दास्तान्। पुरुषएवेदं सर्वम्। साक्षी चेताः केवलोनिर्गुणश्च॥ तद्रूपमनामयम्। अत्रायंपुरुषोज्योती रूपो यस्मात्परं नापरमस्तिकिंचित्। न तत्समश्चाभ्यधिकश्चदृश्यते॥ न तस्यप्रतिमास्तियस्य नाममहद्यशः। इत्येवमादिश्रुतयश्च स्वस्वोपास्येषुदेवेषुयुक्तिभिः पर्य्यवस्यतस्य सर्वोत्कृष्टत्वंज्ञापयन्ति। तत्सर्वंयुक्तं सर्वेषांकारणकार्य्यरूपेणश्रूयमाणानां भगवद्विग्रहाणांपूर्वोत्तरावस्थाभेदाद्वस्तुतोऽभेदाच्चततसर्वमुपपद्यते किंतु तेषांसर्वेषामादिकारणंतत्वं किमस्तीति परिज्ञानाय युधिष्ठिरेणसर्वशास्त्रविशारदयोगिनांश्रेष्ठत्वा

टि० (१) निर्दिष्टं निश्चयेननिर्णीयादिष्टं वर्णितम्॥

भ्यांव्यासस्य सर्वज्ञत्वब्रह्मनिष्ठत्वज्ञापनद्वारास्वसंशयनिवृत्तिपूर्वक परतत्वबोधनसामर्थ्यं प्रकाशयकिंतत्वमित्यादिकं पृष्टंतं तत्प्रश्नस्याभिप्रायंज्ञात्वा श्रीमद्व्यासोपितत्तद्ग्रन्थकारास्तत्तदधिष्ठातृदेवस्य परतत्वंतेते उपासकाययाकयापिरीत्या स्वस्योपास्य देवस्य परत्वं प्रतिपादयन्तीति सत्यम् ॥ उक्तरीत्यायुक्तं च तत् । परन्तु तेषांसर्वेषामुपास्यानां यदादिकारणंपरमतत्वंतत्वतो याथार्थ्येन पक्षपातंपरित्यज्येत्यर्थः ॥ वक्ष्यामिस्पष्टीकृत्यवदिष्यामीति प्रतिज्ञांचकार ॥ ४ ॥

**यत्परं यद्गुणातीतं यज्ज्योतिरमलंशिवम् ।**
**तदेवपरमं तत्वं कैवल्यपद कारणम् ॥ ५ ॥**

एवं प्रतिज्ञाय परगुणातीतज्योतिरादिशब्दानांसाक्षात्परस्वरूपबोधकानांपरतत्वशब्दपर्यायवाचिनां यद्वाच्यं तदेवपरमं तत्वमित्युक्तवान् ॥ एवमुक्तेपि अनपगतसन्देहंयुधिष्ठिरं ज्ञात्वाह ॥ श्रीरामेति-यत्परमित्यादिना । यत्परं सर्वोत्कृष्टं परात्परं यन्महतोमहान्तं ॥ नतत्समश्चाभ्यधिकश्च दृश्यते । तंदेवतानां परमं च दैवतं तमीश्वराणां परमं महेश्वरम् । यस्मात्परंनापरमस्ति किंचित् । यस्मान्नाणीयो नज्यायोस्तिकश्चित् वृक्षइवस्तब्धो दिवितिष्ठत्येकस्तेनेदं पुरुषेणपूर्णं सर्वम् ॥ नसंदृशेतिष्ठति रूपमस्य न चक्षुषापश्यति कश्चनैनं हृदा हृदिस्थं मनसाय एनमेवं विदुरमृतास्तेभवन्ति ॥ नैनमूर्द्ध्वं नतिर्य्यं च नमध्येपरिजग्रभत्[1] । न तस्यप्रतिमास्ति यस्यनाममहद्यश इत्येवमादिश्रुतिभिः । सर्वोत्कृष्टत्वेनोक्तमित्यर्थः ॥ रामंहि परात्परं वक्ष्यति । नारदः । परात्परं राममहंभजामि । गुणातीतमितिगुणान्सत्वादीनतिक्रम्यस्थितम् ॥ साक्षीचेताः केवलो निर्गुणश्चेतिश्रुतेः स-

---

टि० (१ परिजग्रभत् । अत्रछंदसिहकारस्य भकारादेशः। परिजग्रहत् इतिज्ञेयम् ॥

गुणातीतो रामइतिवक्ष्यति वेदसारविशारदः। निदानं प्रकृतेःपरं रघूत्तमंप्रणमामीति प्रकृतिपरस्य तद्गुणपरत्वेन तस्यगुणातीतत्वोपपत्तेः। नचगुणातीतत्वेन रामस्य निर्विशेषत्वं वाच्यम्। उत्तरत्रविशिष्टतयास्तोष्यमाणत्वात्। श्रुतिरपिसाक्षित्वादीन् स्वरूपनिष्ठान्धर्मान्स्वीकृत्य तत्रसत्वादीन् प्रतिषेधयति निर्गुणश्चेति। एवंहिवह्वयः श्रुतयः स्मृतयश्चसगुणनिर्गुणादिशब्दैरेकस्यैव परतत्त्वस्य श्रीरामस्य निखिलहेयप्राकृतगुणरहितत्वमनन्तदिव्यकल्याणगुणविशिष्टत्वं च ज्ञापयन्ति। अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः। तथाऽरसंनित्यमगंधवच्चयत्। सर्वगन्धः सर्वरसः सविश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालोगुणी सर्वविद्यः। साक्षीचेताः केवलोनिर्गुणश्चेत्येवमाद्याः। ससर्वभूतप्रकृतिविकारगुणांश्च दोषांश्चमुनेव्यतीतः। अतीतसर्वावर्णोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले। अनन्तकल्याणगुणात्मकोऽसौस्वशक्तिलेशाद्धृतभूतसर्गः। सगुणो निर्गुणोविष्णुर्ज्ञानगम्योह्यसौस्मृतः। सत्वादयो नसंतीशे-यत्रचाप्राकृतागुणाः महद्गुणानामाधारो[1] रहितः प्राकृतैर्गुणैः। एषसर्वस्य विधृतिर्हेतुश्रुत्याप्रकीर्तितः॥ इत्येवमादयः पराशरादिस्मृतयश्च नचनिर्विशेषे वस्तुनिकिंचित्प्रमाणमस्तिसर्वेषां प्रमाणानां सविशेषवस्तुविषयकत्वात्। तथाहि। नतावत्प्रत्यक्षं तत्र ( ब्रह्मणि ) प्रमाणं चक्षुरादि विषयाणां रूपादीनां तत्राभावात्। रूपाद्यभावेनैवतस्य मानसप्रत्यक्षत्वानुपपत्तेश्च ॥ नाप्यनुमानंवन्हिव्याप्यधूमलिंगवत्॥ तद्व्याप्यलिङ्गाभावेन तदनुमानानुपपत्तेः। नचोपमानं गवयसदृशगोवत्। अद्वितीयत्वेनतस्य सदृशपदार्थादर्शनात्। न च शब्दस्तत्प्रवृत्तिनिमितस्य जात्यादेरभावात्॥ नाप्यर्थापत्तिः। तद्विनानुपपद्यमाना-[2]

टि० (१) सगुणनिर्गुणादिशब्दैरित्यारभ्यविशिष्टत्वं च ज्ञापयतीत्यंतेनपूर्वेणान्वयः॥ १॥

(२) तद्विनाब्रह्मविनाऽनुपपद्यमानस्यजगतोऽभावात्। येनविचित्र

र्थाभावात्॥ नचानुपलब्धिः॥ भावरूपस्य ब्रह्मणस्तद्गोचरत्वादित्येवं निर्विशेषत्वस्य निःप्रमाणत्वोपपत्तेः[1] । दिव्यगुणाधारत्वेनप्राकृतगुणरहितत्वेन चैकस्यैवपरतत्वस्य श्रीरामस्य सगुणत्वं निर्गुणत्वञ्चोपपद्यते ॥ किंवहूक्त्या यासांयासांश्रुतीनां निर्विशेषे वस्तुनिपर्य्यवसाने नाद्वैतमतमुपपादयंति । तास्ताः सर्वा अपिश्रुतयो विशिष्टे वस्तुनि पर्य्यवस्यविशिष्टाद्वैतमेवप्रतिपादयंति । तथाहि॥ साक्षीचेताःकेवलो निर्गुणश्च॥निष्कलंनिःक्रियंशांतंनिरवद्यंनिरंजनमित्येवमाद्याःश्रुतयस्तदभिमतार्थवादिन्य इवदृश्यन्ते तत्रसाक्षिपदार्थप्रतिपत्तिरसाक्षिपदार्थप्रतिपत्तिं तद्दृश्य पदार्थप्रतिपत्तिंचापेक्षते ॥ असाक्षिणम्विना दृश्य पदार्थम्विना च तत्साक्षित्वासिद्धेः । एवं चेतृपदार्थप्रतिपत्तिः । अचेतृपदार्थ प्रतिपत्तिं चेतव्यपदार्थप्रतिपत्तिं चापेक्षते ॥ ताभ्यां विनातस्य तदनुपपत्तेः॥एवं केवलपदार्थप्रतिपत्तिः मिलितपदार्थप्रतिपत्तिमपेक्षते ॥ एवं निर्गुणपदप्रवृत्तिः॥ सगुणपदार्थ विलक्षणपदार्थ बोधनार्थिकासतीस्ववाच्यपदार्थात्पदार्थान्तरं सगुणपदार्थमस्तीति ज्ञापयति। एवं निष्कलपदार्थप्रतिपत्तिः । कलातद्विशिष्टपदार्थ प्रति

---

जगद्रचनाबलेन जगत्कर्तृ किंचिद्ब्रह्मास्तीति कल्पनीयं त्वयातस्यजगतः रज्जुसर्पो दृष्टान्तो नमिथ्यात्वंमन्ये इति भावः अस्मत्पक्षेतुयथा रात्रौ भोजनंविनादेवदत्तस्यपीनत्वं नोपपद्यते तेनदेवदत्त पीनत्वेनतद्रात्रिभोजनंकल्पते ॥ तथैव विशिष्टशक्तिमद्ब्रह्मविना विचित्रस्यजगतोरचनानोपपद्यते इति जगद्विचित्ररचनादर्शनेनतत्कर्तृ विचित्रशक्तिमद्ब्रह्मकल्पतेइत्येवमर्थापत्तिब्रह्मणिप्रमाणम् ॥ देवदत्तोरात्रौभुंक्ते कुतः पीनत्वात् यदिदिवाअभुक्ते सतिरात्रौ न भुनक्ति तदापीनो नभवेत् यन्नैवंतन्नैवं इत्यादिष्वर्थापत्ति ज्ञातव्या ॥ २ ॥

टि० (१) निर्गतोविशेषभावोयस्मात्तन्निर्विशेषत्वम् निर्विशेषस्यनिष्प्रमाणत्वंनिः प्रमाणत्वस्यउपपत्तिः प्राप्तिस्तस्मात् ॥ १ ॥

पत्तिमपेक्षते ॥ निष्क्रियपदार्थ प्रतिपत्तिः। क्रियां तदाश्रयद्रव्यञ्चा-पेक्षते ॥ शान्तपदार्थप्रतिपत्तिः। अशान्ति तदाश्रयभूतमशान्तं वस्तुचापेक्षते ॥ निरवद्यपदार्थप्रतिपत्तिः। सावद्य पदार्थप्रतिपत्तिम-पेक्षते ॥ निरंजनपदार्थप्रतिपत्तिः साञ्जनपदाथप्रतिपत्तिमपेक्षते ॥ एव-मन्यत्राप्यूह्यम् ॥ सिद्धान्तेतु। ताः सर्वा अपिश्रुतयः चिदचिदन्तर्या-मिणः परमात्मनः तदनासक्तत्वेन तत्तत्कर्मद्रष्टत्वेन साक्षित्वम् ॥ तत्प्रकाशकत्वेनचेतृत्वम् ॥ चेतृत्वेऽपितदमिलितत्वेन केवलत्वं तद्गुणा-स्पृष्टत्वेन निर्गुणत्वं ॥ तत्तत्क्रियातत्तत्कलास्पर्शरहितत्वेननिष्क्रिय-त्वं निष्कलत्वं च। तत्तदशान्ति रूपापगुणस्पर्शरहितत्वेनशान्तत्वम्। अपगुणोनिषिद्धगुणः॥ तत्तद्दोषस्पर्शराहित्यान्निरवद्यत्वं॥तत्तद्गता वि-द्यास्पर्शरहितत्वेन निरंजनत्वं च प्रतिपाद्य परमात्मनोऽचिन्त्यशक्ति-त्वेन सर्वोत्कृष्टत्वं ज्ञापयतीत्येवं सर्वासामपीदृशीनां श्रुतीनांविशिष्टा-द्वैतार्थपरत्वेन परस्यब्रह्मणः सविशेषत्वमेवोपपद्यते। ननिर्विशेषत्वम् ननुप्र त्यक्षानुमानादिभिस्तर्कैस्तथात्वदुक्तयुक्तिरूपैस्तर्कैर्नब्रह्मस्वरूपं ज्ञातुंशक्यम् ॥ ब्रह्मणस्तर्कागम्यत्वात् ॥ नैषामतिस्तर्केणापनेया प्रो-क्ताऽन्येन[1] सुज्ञानायप्रेष्ठेतिश्रुतेः। तर्काऽप्रतिष्ठानात्। इति व्याससू-त्राच्चकिंतु वेदोपनिषदेकगम्यंतत्। तन्त्वौपनिषदं पुरुषंपृच्छामः। ना वेदविन्मनुतेतं बृहंतम्। इत्येवमादिश्रुतिभ्यः[2] यतः केवलोनिर्गुणश्च निरवद्यंनिरंजनं शिवमद्वैतमित्येवमाद्याश्रुतयः। ब्रह्मणोऽद्वैततत्वकेवल त्वनिर्गुणत्वनिरंजनत्वादिभिर्निर्विशेषत्वं ज्ञापयन्त्यतोनिर्विशेषम-द्वैतंमतं श्रौतं[3] यौक्तिकंतु[4] विशिष्टाद्वैतं युक्तिभिः सिद्धत्वादिति चेन्नैवं वाच्यम् ॥ निर्विशेषस्यैवाश्रौतत्वात् ॥ कुतःश्रुतिभिरदृश्यस्याचिन्त्यस्यनिर्विशेषस्यकथं चिदपिज्ञानानुदयात्।

---

टि० (१) अन्येनगुरुणाप्रोक्ता (२) श्रुतीनांप्रमाणेभ्यः ॥ (३) श्रुतिभिः प्रोक्तश्रौत्रम् (४) युक्तयाउक्तयौक्तिकम् ॥

तज्ज्ञानविनायुष्माकं तत्स्वरूपप्रतिपादनत्वानुपपत्तेः तदपिकुत इति चेदुच्यते ॥ यद्रूपादिमद् गुणक्रियादिमच्चवस्तुतद्दृश्यंचिन्त्यमनुमेयं च भवति॥ नत्वरूपादिमन्निर्विशेषंवस्तुतदपि रूपादिमद्वस्तु द्विविधमस्ति प्राकृतरूपादिमद्वस्तुप्राकृतचक्षुश्चित्तादीनांदृश्यंचिन्त्यं च भवति ॥ दिव्यरूपादिमद्वस्तुदिव्यचक्षुर्मनश्चित्तादीनांदृश्यंचिन्त्यमनुभवादिकं च भवति ॥ अतः प्राकृत वाङ्मनसोरगम्यत्वं ब्रह्मणः स्वरूपम्वदन्ति ॥ यद्वाचानभ्युदितं । यंमनोनमनुते ॥ यतोवाचोनिवर्तन्तेऽप्राप्यमनसा सहेत्याद्याः श्रुतयः । मनसातुविशुद्धेनाभिक्लृप्तः ॥ दृश्यतेत्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरित्येवमाद्याः श्रुतयस्तुदिव्यचक्षुर्वाङ्मनोविषयत्वंवदन्ति ब्रह्मणः स्वरूपम्॥ यतः॥ नतुमांशक्यसेद्रष्टुमनेनैवस्वचक्षुषा । दिव्यंददामिते चक्षुःपश्यमेरूपमैश्वरम् ॥ इति भगवताकृष्णेन परमेश्वररूपस्याप्राकृतचक्षुरदृश्यत्वं दिव्यचक्षुर्दृश्यत्वंस्फुटीकृतंभवति ॥ तस्माद्यतोवाचोनिवर्तन्तेइत्युक्तम्॥ वाङ्मनसोरगम्यमपिवस्तुरूपादिमद्भवति ॥ अरूपस्यसूक्ष्मबुद्ध्यापिदृश्यत्वानुपपत्तेः । न संदृशेतिष्ठतिरूपमस्य न चक्षुषापश्यतिकश्चनैनम्॥ हृदा हृदिस्थंमनसा यएनमेवं विदुरमृतास्तेभवंतीत्यनया श्रुत्या चक्षुरविषयस्यविशुद्धमनोज्ञेयस्यापिरूपत्वोक्तेश्च रूपमस्येत्यनेन किंचतत्त्वजिज्ञासवस्तदुपदेष्टारश्च विद्वांसः श्रुतिस्मृतिभिः परब्रह्मस्वरूपमनन्तचिदात्मकमस्तीतिजानंति ॥ स्मृतयस्तुश्रुत्युक्तमर्थम्वदन्ति तासांश्रुत्यर्थोपबृंहणरूपरूपत्वात् ॥ तत्समानार्थकपदर्वाक्यैर्वातदर्थप्रकाशनत्वंतदुपब्रंहणत्वमित्युपब्रंहणलक्षणात्॥श्रुतयस्तुकस्योक्तमनुवदन्तिनकस्यापि तासांस्वतंत्रप्रमाणत्वात् ॥ अज्ञातार्थज्ञापक प्रमाणमितितल्लक्षणात् ॥ यथार्थज्ञानंप्रमा[1] प्रमाजनकं प्रमाणमिति वा तल्लक्षणात् ॥ यथार्थज्ञान

टि० (१) यथार्थज्ञानंप्रमा तत्रचक्षुषादर्शनेनरूपस्य यज्ज्ञानंतत्प्रमा तत्प्रमाजनकं चक्षुरेवनतुश्रवणादि एवमन्यत्रापिज्ञेयम् ॥

न्तुश्रोत्रियब्रह्मनिष्ठगुरूपदेशाद्भवति ॥ साक्षाद्वस्तु दर्शनाद्वा ॥ न च वेदानांतत्वोपदेष्टा कश्चित्गुरुः श्रूयते ॥ श्रूयतेच भगवन्निश्वासे न तदाविर्भावमात्रम्॥ अस्यैवमहतोभूतस्यनिःश्वसितमेतदृग्वेदमित्यादि। अतः श्रुतीनांब्रह्मसाक्षाद्दर्शनमस्तीत्यवगम्यते ॥ तासां तद्दर्शनंविनात-द्यथार्थज्ञानानुपपत्तेः ॥ तद्यथार्थज्ञानंविनातुतदुपदेष्टत्वानुपपत्तेः॥ स्वतंत्रप्रमाणत्वानुपपतेश्च॥ तददृष्टेवतज्ज्ञानन्ति च तद्वदन्तीतिचेत्॥ तर्हितद्यथार्थज्ञानविनांतदुक्तस्यायथार्थत्वोपपत्तेरप्रमाणत्वंवाच्यम्॥ तदृष्ट्वायथार्थंज्ञात्वा च वदन्तीति चेत्तदातद्रूपादिमत्वसिद्धिः। अरू-पवतोदर्शनानुपपतेस्तद्दर्शनं बिनायथार्थज्ञानानुपपत्तेः तद्यथार्थज्ञान रहितबचनस्याप्रमाणत्वोपपतेश्च गुरूपदेशंविनासाक्षाद्दर्शनंविना च न तद्यथार्थज्ञानं भवतीत्यसकृदवोचामः ॥ तत्रापि श्रौत्रीयब्रह्मनिष्ठ गुरूपदिष्टार्थश्रवणमात्रेणापिन अपरोक्षज्ञानंभवति किन्तु तन्मनन निदिध्यासनादिति आत्मावारे द्रष्टव्यः श्रोतव्योमन्तव्योनिदिध्यासितव्य इत्यस्याः श्रुतेरवगम्यते॥ तस्माद्गुरूपदिष्टतत्वमनन निदिध्यासनानन्तरं यदपरोक्षज्ञानशब्दोक्तं तद्दर्शनंतद्भवति ततश्चतन्मुक्तिर्भवति। न साक्षात्तद्दर्शनं विना॥ ऋते ज्ञानान्नमुक्तिरितिश्रुतेरित्येवकेनाप्यनुपदिष्टतत्वज्ञानत्वात्॥ श्रुतीनांस्वतः साक्षात्परब्रह्मदर्शनं ततश्चब्रह्मज्ञानोपदेशार्हत्वंस्वतः प्रमाणत्वंतदृश्यस्यपरब्रह्मणोरूपवत्वं तेन च तस्यसविशेशत्वं निष्पद्यते। इतोदंनिर्बाधराद्धांतंज्ञेयम्॥ श्रुत्युक्तं मनननामगुरुपदिष्टतत्वज्ञानस्य पुनः पुनः निरंतरविचारेण निःसंदेहीकरणम्। तदनन्तरं तन्निदिध्यासनम्। तन्निदिध्यासनम्। तन्नाम पुनः पुनः नैरन्तर्य्येण तद्ध्यानं तच्चिंतनं तदवलोकनम्। निदिध्यासन पदस्य 'ध्यै' चिन्तायामिति धातोरूपत्वात्॥ ततस्तदपरोक्ष्य ज्ञानोक्त तद्दर्शनंततश्च तद्द्रष्टुः संसारान्मुक्तिरितिज्ञेयम् ॥ यदिदं निदिध्यासनमुक्तंश्रुत्यातदेव ॥ आहारशुद्धौसत्वशुद्धिः सत्वशुद्धौध्रुवास्मृतिः। स्मृतिलाभे सर्वग्रन्थीनांविप्रमोक्षः प्रजायते इत्यनयाश्रुत्यास्मृतिशब्देनोक्तंभवति। स्मृतिरीध्याने॥ आध्यानं सर्वभावेन चिंतनमित्येव

माध्यानस्यापि "ध्यै"चिन्तायामिति धातुरूपत्वेननिदिध्यासनस्मृति शब्दयोरेकार्थकत्वोपपत्तेः ॥ तदेवेदं निदिध्यासनस्मृतिशब्दोक्तमर्थं गीतायां भगवता श्रीकृष्णेन स्मरणचिन्तनमनोनिवेशनचित्तावेशन ध्यानोपासनभक्त्यादिशब्दैरुक्तंभवति ॥ अनन्याश्चिंतयंतोमांयेजनाः पर्युपासते। तेषांनित्याभियुक्तानांयोगक्षेमं वहाम्यहम् ॥ अनन्यचे- ताःसततंयोमांस्मरतिनित्यशः । तस्याहंसुलभः पार्थनित्ययुक्तस्य योगिनः ॥ अनयोर्द्वयोरपिश्लोकयोरेकार्थकतवात्। अत्रत्याऽनन्यचिन्त- नसततस्मरणपदयोरेकार्थकत्वोपपत्तेः । स्मरणपदस्य चिन्तनार्थ कत्वमुपपद्यते। येतुसर्वाणि कर्माणिमयिसंन्यस्यमत्पराः। अनन्येनैव योगेनमांध्यायन्तमुपासते। तेषामहंसमुद्धर्तामृत्युसंसारसागरात् ॥ भवामिनचिरात्पार्थमय्यावेशितचेतसा ॥ मय्येवमन आधत्स्वमयि बुद्धिंनिवेशय। निवसिष्यसि मय्येवातऊर्द्ध्वं न संशयः ॥ मन्मनाभ- वमद्भक्तोमद्याजीमांनमस्कुरु । मामेवैष्यसिसत्यन्ते प्रतिजाने प्रियोऽ- सिमे ॥ अत्रमांध्यायन्तइत्यस्थानेमय्यावेशितचेतसामित्यस्यप्रयोगात्॥ ध्यान आवेशितचेतसोरुभयोः पदयोरेकार्थकत्वोपपत्तेः ॥ आवेशित चेतः पदस्यतत्पर्यायवाचिनांमय्येवमनआधत्स्वमयि बुद्धिंनिवेशय ॥ मन्मनाभवेत्येवमादीनांचभगवदत्यन्तचिन्तनार्थकत्वमुपपद्यते ॥ तथा मद्भक्तिंलभते परामित्युक्तोभक्तिशब्दोऽपितदत्यन्तचिंतनार्थकः ॥ भजनं भक्तिः। भजसेवायामिति धातोरूपं भजनं भक्तिश्चसेवनम् सेवनंत्व- त्रमानसंमनसाभगवत्स्वरूपसेवनरूपमवगम्यते ॥ तथैवाहनृसिंह तापनीयाश्रुतिः। भक्तिरिहभजनं तदिहामुत्रनैरास्येनामुष्मिन्मनःकल्प- नंतदेवैतन्नैष्कर्म्यमित्येषा भक्तिर्नामभजनम् ॥ भजनंनाम इहलोकपर- स्वर्गादिलोकवैराग्यपूर्वकममुष्मिन्परेतत्वे परेब्रह्मणिमनःक- ल्पनंसमर्थनंमनःप्रवेशनम्[१] ॥ तदेव नैष्कर्म्यं सर्वकर्मरहितं सर्वकर्म नाशकं ज्ञानं भवतीति यावत् ॥ अनया श्रुत्यायतोभक्तेः परमेश्व-

---

टि० (१) यावन्नामएतावत्प्रमाणम् ॥

रैकमनः प्रवेशत्वरूपंस्वरूपमुक्तमतोनिदिध्यासनस्मृतिभक्तिध्यानोपासनमनोबुद्धिचेतोनिवेशनेत्येवमादयः ॥ सर्वेपिशब्दा घटकलशशब्दवत्पर्य्यायवाचिन इत्यवगम्यते ॥ सर्वेषामत्रोक्तश्रुतिस्मृतिवाक्यानामेकार्थकत्वोपपत्तेः । सर्वेषां तेषांनिदिध्यासनादीनां मोक्षैकफलकत्वाच्च ॥ सर्वेपर्य्यायवाचिनस्तेयद्यपि । तथापि । आत्मावारे द्रष्टव्य इत्यात्मदर्शननिदिध्यासनस्य फलम् ॥ तस्याहंसुलभः पार्थेति सुलभमनन्यचित्तस्मरणस्यफलं तेषामहं समुद्धर्ताभवामि । न चिरान्मय्यावेशितचेतसामिति तदावेशितचेतसः फलमुक्तम् ॥ निवसिष्यसिमय्येवातऊर्द्धमितिमय्येव मन आधत्स्व मयिबुद्धिं निवेशय। इत्यनयोः फलमुक्तम् ॥ मामेवैष्यसिसत्यंतेप्रतिजाने इति मन्मना भव इत्यस्य फलमुक्तम् ॥ भक्त्यात्वनन्यया शक्योहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप ॥ तथा—ब्रह्मभूतःप्रसन्नात्मा न शोचति न कांक्षति ॥ समः सर्वेषु भूतेषु मद्भक्तिंलभतेपराम् ॥ भक्त्या मामभिजानाति यावान् यश्चास्मि तत्वतः । ततोमां तत्वतो ज्ञात्वा विशतेतदनन्तरमिति ॥ तदेकमनःकल्पनरूपायाभक्तेस्तत्स्वरूपयथार्थं ज्ञानं तद्यथार्थदर्शनं तद्यथार्थप्राप्तिरूपं च फलमुक्तमतो निदिध्यासन भक्त्योः फलभेदाद्भेदोऽवगम्यते॥उभयोः साधारणासाधारणपदत्वाच्चापि भेदउपपद्यते ॥ तथाहि। आत्मावारे द्रष्टव्यःश्रोतव्योमन्तव्यो निदिध्यासितव्य इतीयं श्रुतिर्निदिध्यासनस्यात्मविषयकत्वमात्म दर्शनरूपफलं च वदति ॥ आत्मातुजीवात्मपरमात्मभेदेनद्विविधः। आत्मा देहधृतौ जीवेस्वभावे चपरमात्मनीति कोषकारवचनात्॥ अतो निदिध्यासनपदं तदुभयविषयकत्वेन साधारणम् । आत्मचिंतनंकरोति किम्बापरमात्मचिन्तनंकरोतीति लौकिकप्रयोगाच्चआत्मपदपरमात्मपदसाधारणत्वमुपपद्यते निदिध्यासनस्यतद्वृत्तित्वेसतितदन्यवृत्तित्व साधारणत्वमिति तल्लक्षणात्। भक्तिपदंतुपरमात्मैकपरत्वेनतद साधारणंतद्वृतित्वेसतितदन्यावृत्तित्वमसाधारणत्वमितितल्लक्षणात् भक्तिरिहभजनं तदिहामुत्रनैरास्ये नाऽमुष्मिन्[१]मनःकल्पनम् । तदेतदेव

टि० (१) अमुष्मिन्परमात्मनि ॥

नैष्कर्म्यमित्येषाश्रुतिरमुष्मिन्निति[1] पदनिर्दिष्टे परमात्मनिमनःकल्पनं मनःप्रवेशनं यत्तदेवभक्तिशव्दवाच्यमितिवदति। तत्रत्यस्य विप्रकृष्टदेशस्थवस्तुवोधकाऽदश्शव्दरूपाऽमुष्मिन्नितिपदस्यपरमात्मपरत्व मेवोपपद्यते॥ नतुप्रत्यगात्मपरत्वम्॥प्रत्यगात्मपरत्वेतुतस्याऽस्मिन्मनः कल्पनमिति ईद्दशः सन्निहितवस्तुवाचीदंशव्दप्रयोगः स्यात । अय मात्माब्रह्मेतिश्रुतिप्रयोगवत्। अतः श्रुतिवचनातपरमात्मैकविषयत्वं भक्तेर्निष्पद्यते ॥ तथैव भगवान् श्रीकृष्णोपि भक्तेः स्वैकविषयत्वं स्वैकप्राप्तिफलकत्वं चोक्तवान्। मद्भक्तिंलभतेपराम्।भक्त्यामामभिजानाति यावान्यश्चाऽस्मितत्वतः।ततोमांतत्वतोज्ञात्वाविशतेतदनन्तरम्॥ भक्त्यात्वनन्ययाशक्योहमेवंविधोर्जुन । ज्ञातुंद्रष्टुं च तत्वेनप्रवेष्टुंच परंतपेत्यादिना ॥ किंच ॥ कर्मयोगिज्ञानयोगिभ्यः सर्वेभ्यः स्वानन्य भक्तस्य वहुश्रेष्ठत्वंस्वाभिमतत्वं चोक्तवान्। सएवभगवान् श्रीकृष्णः योगिनाम[2]पिसर्वेषांमद्गतेनान्तरात्मना। श्रद्धावान्भजतेयोमांसमेयुक्ततमोमतः॥ मय्यावेश्यमनोयेमांनित्ययुक्ता उपासते। श्रद्धयापरयोपेतास्तेमेयुक्ततमामताः। अत्रमय्यावेश्यमन इत्येनेन भगवत्स्वरूपाकारामनोवृत्तिरुक्ता॥ नित्ययुक्ता इत्यनेनतस्या[3] वृत्तेस्तैलधारावदविच्छिन्नत्वमुक्तम्। उपसमीपे॥ आसतेइत्युपासतेमनसा भगवत्समीपे तिष्ठन्तीत्यर्थः॥ इत्यनेनभावनाविषयभगवत्स्वरूपस्य मनसा दर्शनमुक्तम्।[4] तेनोक्तवृत्तेर्दर्शनसमानाकारत्वमवगतंश्रद्धयापरयोपेता इत्य

टि० (१) वदतीत्युत्तरेणान्वयः॥

टि० (२) सर्वेषांकर्मयोगिज्ञानयोगिभक्तियोगिनांमध्ये यः श्रद्धावान् मद्गतेनान्तरात्मनाध्यानेनभावनयामांप्राप्ते अंतःकरणे स्वहृदयाकाशे आत्मना मनसामांभजतेस ममयुक्ततमोमतः। १ ॥

टि० (३) तस्याः भक्तेर्वृत्तेः॥ २ ॥

टि० (४) तेनोक्तवृत्तेर्भगवत्स्वरूपाकारमनोवृत्तेः॥ ३ ॥

नेन तस्या वृत्तेः । परमप्रेमाक्लिन्नत्वमुक्तं तेनतैलधारावदविच्छिन्ना दर्शनसमानाकारा परमप्रेमाक्लिन्ना भगवत्स्वरूपाकारा मनोवृत्तिर्भक्तिरितिभक्तेर्लक्षणमुपपन्नम् ॥ सेयं भगवदसाधारणभक्तिः साधारणाशास्रान्निदिध्यासनादत्यंतोत्कृष्टा साधारणासाधारणयोरसाधारणस्य विशेषपदत्वेन वलीयस्त्वात् ॥ अथ भक्तेर्लक्षणान्तरमाह ॥ अनन्यचेता इत्यादि । अनन्यचेताः सततंयोमांस्मरति नित्यशः ॥ तस्याहं सुलभः पार्थ नित्ययुक्तस्ययोगिनः ॥ इति अत्रमय्यावेश्यमनो मनोमयिआवेश्यमदाकारं कृत्वा इत्यनेन मनोवृत्तेर्भगवदाकारत्वमुक्तम् ॥ तथोपासते । उपसमीपमास्ते नित्ययुक्ताइत्यनयोर्नित्यं मत्समीपमास्ते इत्यर्थकत्वोपपत्तेराभ्यां भगवदाकारमनोवृत्तेः स्वाभाविकीत्वंज्ञापितम्॥ तथा सततंनित्ययुक्ताः ॥ इत्याभ्यामेवतस्या वृत्तेस्तैलधारावदविच्छिन्नत्वंज्ञापितम् ॥ श्रद्धया परयोपेता इति स्पष्टार्थकं पदं तैरेतैः पदैस्तैलधारावदविच्छिन्ना परमश्रद्धोपेता भगवदाकारास्वाभाविकी मनोवृत्तिः पराभक्तिः ॥ इति पराभक्तेर्लक्षणं ज्ञापितं भवतिभगवतासर्वज्ञेन वासुदेवेन सैषाभक्तिर्मुक्तिरपि गरीयसीकिं पुनर्निदिध्यासनान्मुक्तिसाधनादित्युक्तं भागवते ॥ देवानांगुणलिङ्गानामानुश्रविककर्मणाम् । सत्वएकैवमनसोवृत्तिः स्वाभाविकीतुया ॥ अनिमित्ता भागवतीभक्तिः सिद्धेर्गरीयसी । जरयत्याशु याकोशं निगीर्णमनलोयथेति ॥ मुक्तिंददाति कर्हिचिन्नतुभक्तियोगमिति च सैषाभक्तिः सर्वेभ्योभगवत्प्राप्त्युपायेभ्यः श्रेष्ठतमावगम्यते ॥ यतोभगवन्तं प्रतीयमेव भक्तिर्याचिता नतूपायान्तरं शिवनारदादिभिः ॥ एवं स्तुत्वा परंरूपं जानक्याजाड्यनाशनम् । उपारराम शांतात्मा योगेश्वरसदाशिवः ॥ निरीक्षन्तंमुखाम्भोजं भावयन्रूपमद्भुतम् ॥ कांक्षन्तस्याः परांभक्तिं पादपंकजयोर्दृढामिति जानकीस्तवराजोक्तेः ॥ वरंनयाचे रघुनाथयुष्मत्पादाब्जभक्तिः सततं ममास्तु॥ इदं प्रियं नाथवरंप्रयच्छ पुनः पुनस्त्वामिदमेव याचे ॥ इति रामस्तवराजोक्तेश्च । एवं वरलाभावसरे भगवन्तम्प्रति सर्वैरपि तद्भक्ति-

रेवयाचिता ॥ नतूपायान्तरम्॥ किंच सर्वोपायसाध्यभगवद्दर्शनान्तर-मपि तद्भक्तेर्याचनाद् भक्तेः परमपुरुषार्थत्वमप्यवगम्यते ॥ सैषा-भक्तिर्भगवतः परमप्रियाभवति ॥यतः॥ एतद्भक्तिमन्तः प्राणिनः श्वपच पर्य्यंताअपि परमप्रिया भगवतोनतुतद्रहिता चतुर्वेदिनो ब्राह्मणा-अपीत्युक्तम् । श्रीमुखेन "नमेप्रियश्चतुर्वेदीभक्तोमेश्वपचप्रियः।तस्मैदेयं ततोग्राह्यं सचपूज्यो यथाह्यहम् ॥ १ ॥ इतिभागवतेऽपि ॥ साधवो-हृदयंमह्यं साधूनांहृदयंत्वहम्। मदन्यत्तेनजानन्ति नाहं तेभ्योमनागपि। वशीकुर्वन्तिमांभक्त्या सत्स्त्रियःसत्पतिंयथा । अहंभक्तपराधीनोह्य स्वतंत्र इवद्विज ॥ साधुभिर्ग्रस्तहृदयोभक्तैर्भक्तजनप्रियः । नाहमा-त्मा न माशासेमद्भक्तैः साधुभिर्विना । श्रियंचात्यंतिकीं ब्रह्मन्येषां गतिरहंपरा ॥ ये दारागारपुत्राप्तान्प्राणान्वित्तमिमंपरम् ॥ हित्वा-मांशरणंयाताः कथंतांस्त्यक्तुमुत्सहे" ॥ इत्यादि ॥ यश्च गीतायां भगवता ज्ञानीभक्तउक्तः सोप्ययमेव भगवत्परभक्तिमानिति तत्प्रति पादकवाक्यैरवगम्यते ॥ नमांदुष्कृतिनोमूढाः[1] प्रपद्यन्ते नराधमाः । माययापहृतज्ञानो ह्यासुरं भावमाश्रिताः ॥ चतुर्विधाभजन्तेमांजनाः सुकृतिनोऽर्जुन । आर्तोजिज्ञासुरर्थार्थी ज्ञानी चभरतर्षभ ॥ तेषांज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते। प्रियोहिज्ञानिनोऽत्यर्थमहंस चममप्रियः उदाराः सर्व एवैतेज्ञानीत्वात्मैव मेमतम् । आस्थितः सहियुक्तात्मा मामेवानुत्तमांगतिम् ॥ बहूनां जन्मनामंते ज्ञानवान्मांप्रपद्यते । वासु-देवः सर्वमिति समहात्मा सुदुर्लभः ॥ इत्येतैस्तत्रैकस्मिन्मयिभक्ति र्यस्यस एकभक्तिरित्यनेनज्ञानिनोभगवदनन्यभक्तिमत्वमुक्तम् ॥ एका-मुख्या पराभक्तिर्यस्य स एकभक्तिरिति व्युत्पत्या ज्ञानिनः परभक्ति-मत्वमुपपद्यते ॥ पुनश्चतुर्विधाभजन्तेमामिति चतुर्विधेषु भक्तेषु ज्ञा-

---

टि० (१) दुष्कृतिनो दुःखरूपाणि कर्माणि कारिण मूढ़ा मूर्खा अध-मा नराणांमध्येऽत्यन्तनीचा माययापहृतज्ञाना एते चतुर्विधा नरा मां न प्रपद्यन्ते ॥ १ ॥

निनोपिगणनातस्यापिभगवद्भक्तत्वमुपपद्यते ॥ पुनः पराभक्तिपरवाक्येषुनित्ययुक्ता इत्यनेनयोऽर्थ उक्तः सोऽत्रापिज्ञानी परवाक्येनित्ययुक्त इत्यनेनोक्तो यश्चार्थस्तत्रानन्यचेता इत्यनेनपदेनोक्तः। भगवतासोऽर्थोऽत्राप्यास्थितः ॥ सहियुक्तात्मामामेवानुत्तमांगतिमित्यनेनोक्तः ॥ इत्येवं पराभक्तिपरवाक्यानां ज्ञानीपरवाक्यैः सहैकवाक्यतोपपत्तेरुभयपरवाक्यानामेकपरमपुरुषपरत्वावगमात् ॥ यस्तत्र पराभक्तिविशिष्टत्वेनोक्तः स एवात्रज्ञानीपदेनोक्तः। तस्मात्पराभक्तिमानेव ज्ञानीज्ञान्येव पराभक्तिमानित्युपपन्नतरं स एवायं ज्ञानीभक्तः प्रपन्नशब्देनाप्युच्यते ॥ तत्र तत्र शास्त्रे आस्थितः ॥ 'समामेवानुत्तमां गतिम्' इत्यनन्यगतित्वस्यप्रपन्नधर्मस्य ज्ञानीपरत्वेनोक्तत्वात् ॥ ज्ञानवान्मां प्रपद्यते ॥ इति ज्ञानिनो भगवत्प्रपदनस्य स्फुटमुक्तत्वाच्च ॥ पुनश्च नमां दुष्कृतिनो मूढाः प्रपद्यन्ते । इत्युक्तस्य प्रपद्यन्तेइत्यस्य पदस्य स्थानेचतुर्विधाभजन्ते मामिति भजंतइत्यस्य पदस्यप्रयोगात् । प्रपदनभजनपदयोर्घटकलशशब्दवत् । पर्य्यायवाचित्वावगमात् ॥ भगवद्भक्त एव क्वचिद्भक्तपदेनोच्यते क्वचित्प्रपन्नपदेनोच्यते ॥ एतावांस्तु विशेषः ॥ भक्तशब्दो ज्ञानी अज्ञानीत्युभयविधभगवद्भक्तपरः । प्रपन्नशब्दस्तु केवलज्ञानिभगवद्भक्तपरः। प्रपन्नशब्दस्य ज्ञानिमात्रवाचकत्वोपपत्तेः ॥ तथाहि ॥ पदगताविति धातोरुपपन्नपदम् ॥ पदगतौ [१] गत्यर्था ज्ञानार्था प्रकर्षेण ज्ञानवान्यः स प्रपन्नोगत्यर्थात्कर्तरिक्तः। स्वस्वरूपपरस्वरूपप्रकृष्टज्ञानवानित्ययं प्रपन्नशब्दार्थः ॥ तथा स्वस्वरूपपरस्वरूपज्ञानं विद्यते यस्यस ज्ञानीत्येवंप्रपन्नज्ञानिपदयोरेकार्थपरत्वोपपत्तेश्च ॥ तथा परभक्तिमतोपि ज्ञानित्वमुपपद्यते ॥ ब्रह्मभूतः प्रसन्नात्मा न शोचति नकांक्षति । समः सर्वेषुभूतेषुमद्भक्तिं लभतेपराम् ॥ भक्त्यामामभिजानाति यावान्यश्चात स्मित्वतः। ततो मांतत्वतोज्ञात्वाविशतेतदनन्तरमित्युक्तः परभक्तिमानपि ज्ञानीभवति

---

टि० (१) गत्यर्था धातव ज्ञानार्था भवंति ॥ १ ॥

स्व पर स्वरूपप्रकृष्ट वानित्ययं प्रपन्नशब्दार्थः ॥

ब्रह्मभूतः स्वात्मानंप्राप्तः। अतः प्रसन्नात्मा प्रसन्नमना आत्मप्राप्तत्वाच्च न गतंवस्तुशोचति॥ नागतमप्राप्तं कांक्षति। सर्वेषुभूतेषुसमः समदृष्टिरित्येतैः विशेषणपदैस्तस्यस्वस्वरूपज्ञानित्वज्ञापनात्॥ ततश्च परभक्तिप्राप्त्युक्तेस्ततो भगवत्स्वरूपयाथात्म्यज्ञानपूर्वकतत्प्राप्त्युक्तेश्च सोऽपि परभक्तिमान्प्राणी ज्ञान्यस्तीति॥ ब्रह्मभूत इतिपदेनज्ञापितं भवति। तस्यैवस्वभक्तेषुसर्वेषु श्रेष्ठत्वंस्वात्यन्तप्रियत्वं च ज्ञापनाय तेषां ज्ञानीनित्ययुक्तएकभक्तिर्विशिष्यते॥ इत्युक्तम्॥ अतोयः परभक्तिमान्स एवज्ञानी भक्तः॥ योज्ञानीभक्तः स एव परभक्तिमानित्युपपन्नतरम्॥ यश्चज्ञानीभक्तः स एव प्रपन्नशब्दवाच्यो न ततोऽन्यः॥ वेदपुराणादिषुभगवत्पराणांमध्ये ज्ञानिन एव सर्वश्रेष्ठत्वभगवदेकगतित्वभगवदत्यंतप्रियत्वश्रवणेन ज्ञानिव्यतिरिक्तस्यभगवत्प्रपन्नत्वानुपपत्तेः। ज्ञानिनस्तुभगवत्परेषु सर्वेषुश्रेष्ठत्वश्रवणाच्च॥ अस्यैव ज्ञानिनः सर्वधर्मपरित्यागित्वमुपपद्यते। कर्मादिपरस्यभगवन्नित्ययुक्तत्वतदेकभक्तित्वतदेकगतित्वतदेकसर्वस्वत्वानुपपत्तेः। वासुदेवःसर्वमिति सर्वमातृपितृस्त्रीपुत्रभ्रातादिकं तथोपाय उपेयश्चेत्यादिकं सर्ववासुदेव एवेत्येवं मन्यमानस्य प्रयोजनाभावाद्धर्मान्तरानुष्ठानानुपपत्तेः 'धर्म्मान्तरानुष्ठातुर्वासुदेवैकसर्वत्वानुपपत्तेश्चेत्युपपन्नम्॥ परभक्तिमतोज्ञानित्वं तस्यैव ज्ञानिनः प्रपन्नत्वंतस्यैव च सर्वधर्मपरित्यागपूर्वकभगवच्छरणागतत्वं भगवत्परभक्तिपरत्वञ्चेति॥ यस्त्वद्वैतनिर्विशेषब्रह्मवादिनामभिप्रेतो ज्ञानीतस्यशास्त्रोक्तज्ञानित्वंनोपपद्यते॥ अद्वैतवादस्य तत्साधकानांविवर्तादिकवादानामनुपपत्तेः॥ तथाहि प्रथमं निर्विशेषमद्वैतं ब्रह्मतस्मान्निर्गुणान्निर्विकारान्नप्रकृतेरुत्पत्तिरुपपद्यते॥ न चनिरीहस्य प्रकृत्युत्पादकत्वमतः प्रतिविंबाधाराऽभावान्नप्रतिविंबवाद[१] उपपद्यते॥ तिमिरादिदोषदूषितचक्षुःपुरुषा

टि० (१) किंच। अलोहितं लोहितोवर्णस्तद्रहितमलोहितमछायमितिछायाप्रतिषेधश्रुतेरछायस्य प्रतिविंबानुपपत्तेरपिनप्रतिबिम्बवादमुपपद्यते॥ १॥

भावाच्च द्विचन्द्रवादोऽप्युपपद्यते ॥ आरोप्यस्यजगतो ऽभावान्नविवर्त वाद उपपद्यते ॥ सृष्ट्युत्तरकालेपि न विवर्तादिवादा उपपद्यंते ॥ तथाहि—दृष्टांतेरज्जुरधिष्ठानं तत्रारोप्यः सर्प्पः कल्पितः । नहितस्य कल्पितस्य सर्पःस्यरज्जौसर्पभ्रांतिर्भवति । नच ससर्पः तंदृष्ट्वा दुःखीभवति एवं दार्ष्टांतेऽपि । अधिष्ठानं ब्रह्मतत्रारोपितं कल्पितं चराचरात्मकं सर्वंजगत् । तस्यारोपितस्यचराचरस्य सर्पस्यरज्जाविवनब्रह्मणिजगद्भ्रांतिरुपपद्यते॥ नचतद्भ्रांतिकृतंतत्संसरणञ्च किंतुरज्जौसर्पभ्रांतिमतांसर्प्पभिन्नानां जीवानामिवब्रह्मणिजगद्भ्रांतिमतांब्रह्मजगद्भिन्नानांजीवानां ब्रह्मस्वरूपाऽज्ञानिनाम् ॥ तेके ब्रह्मजगद्भिन्ना नकेपीति दृष्टांतासंगतिः । एवंद्विचन्द्रवादेपिचन्द्रे चन्द्रोऽद्वितीयः कल्पितो योनतस्यद्विचन्द्रभ्रांतिर्भवति किन्तुतिमिरादिदोषदूषितद्रष्टॄणांतदन्येषांतथा कल्पितचन्द्रवदज्ञानिभिर्ब्रह्मणि कल्पितंजगत् ॥ तस्यजगतोजगद्भ्रांतिर्नोपपद्यते ॥ किंतुद्विचन्द्रद्रष्टॄणामिवतदेन्येषांतेकेनकेपीति ॥ दृष्टांतासंगतिः ॥ एवं प्रतिबिंबवादेपि बिम्बेप्रतिबिंबः कल्पितः ॥ जलाद्युपाधिधर्माणां चलनादीनांस्पर्शो यथाप्रतिबिंबस्यबिंबेनभवति ॥ किंतु तद्रष्टॄणांप्रतीयते तथैवोपाधिभूतमायाकृतसुखदुःखादीनां स्पर्शोदेहिनां ब्रह्मकल्पितानांमाभवतु । किन्तुब्रह्मकल्पितभिन्नानामेव तेकेनकेपीति दृष्टान्तानुपपत्तिः ॥ एवमद्वैतमतोपपादकायेविवर्तादिवादास्तेमया श्रीरामोत्तरतापिनीयभाष्ये बहुधानिरस्ताः ॥ अतस्तेतत्रैवद्रष्टव्याः ॥ अत्रग्रंथभूयस्त्वभयान्नलिख्यंते ॥ इत्यलनिर्विशेषवादनिरासेन ॥ अथप्रकृतमनुसरामः ॥ यज्ज्योतिरिति । स्वयंप्रकाशमानमितिचिद्घनत्वं दर्शितंतज्ज्योतिः । श्रीरामएवइतिवक्ष्यतिश्रीनारदः ॥ ज्योतिर्मयंराममहंभजामीति ॥ अत्रस्वार्थिकोमयट् प्रवणवज्योतिरूपिणम् ॥ रघूत्तमंप्रणमामीतिनारदेनैव श्रीरामस्यज्योतिरूपित्वोक्तेः । अमलम् ॥ मायामलरहितम् ॥ अतएवतस्य विशुद्धसत्वात्मकपरविभूतिस्वामित्वमुपपद्यते ॥ तदेवश्रीरामः । इतिवक्ष्यतिनारदः ॥ अगोचरं निर्मलमेकरूपंनमामि रामंतमसः परता-

दिति । तमसः परास्तादित्यनेन निर्मलस्यपरविभूतिस्वामित्वंज्ञापितं-भवति । सूतोऽपि श्रीरामस्यामलत्वंवक्ष्यति । रामंरत्नकिरीटकुण्डल-युतं केयूरहारान्वितम् ॥ सीतालंकृतवामभागममलमिति शिवम् । स-दैवमंगलरूपमिति॥ परमानन्दरूपत्वं तेन ज्ञापितं कालकृतपरिणामा-पेक्षयादिप्रतिषेधस्तथा च॥ विज्ञानमानंदं ब्रह्मेत्यादिश्रुतिसिद्धम् ॥आ-नन्दमयचित्स्वरूपरूपगुणशालित्वंसिद्धं वक्ष्यतिचैवमग्रेश्रीनारदः । श्रीरामस्य शिवत्वंसच्चिदानन्दरूपत्वं च ॥ शांतंशिवंशांतिमयंशरण्यं सनातनंराममहंभजामि ॥ विभुंचिदानन्दमयस्वरूपमिति ॥ सत्यानन्दं चिदात्मकमिति ॥ चिन्मयानन्दविग्रहमिति चैवमादि ॥ ईदृशंयत्तादेव- । परमंतत्वम् । तदेवकैवल्यपदस्यत्रिपाद्विभूतेः कारणंतत्प्रदमित्यर्थः ॥५

## श्रीरामेतिपरंजाप्यं तारकं ब्रह्मसंज्ञकम् ।
## ब्रह्महत्यादिपापघ्नमिति वेदविदोविदुः॥६॥

तद्विपरगुणातीतादिसामान्यशब्दवाच्यं विशेषतोबुद्ध्यना रूढत्वेनानभिव्यक्तस्वरूपपरमतत्वं किमितिसंदिहानं प्रतिविशेषतस्त द्बोधायतद्विशेषंरूपंज्ञापयति ॥ श्रीरामेति ॥ इतिशब्दःप्रथमप्रश्नसमा-प्त्यर्थः ॥ सच्चिदानन्दार्थकरामपदवाच्यमित्यर्थः ॥ रमन्तेयोगिनो ऽनन्तेसत्यानन्देचिदात्मनि । इतिरामपदेनासौ परंब्रह्माभिधीयते ॥ इतियस्मिननंते सत्यानन्दे चिदात्मनि योगिनोरमन्ते स सत्यानन्द-चिदात्मा रामइति रामपदेन इति निरुक्त्यासिद्धेन सच्चिदानन्दार्थ-केनरामपदेनासौ दाशरथिरामःपरंब्रह्म परंतत्वमभिधीयते ॥ इत्यर्थ-कयाश्रुत्यारामपदवाच्यस्यपरंब्रह्मपरतत्वतोक्तेः । परात्परतरंतत्वं सत्यानन्दंचिदात्मकम् । मनसाशिरसानित्यंप्रणमामिरघूत्तममित्यग्रे-नारदेन व्यासेन च रामस्यैव सत्यानन्दचिदात्मकपरमतत्वत्वस्फुटी-[1]

टि० (१) परमतत्वस्यभावःपरमतत्वम् ॥

करणाच्च ॥ एवं परमतत्वविशेषज्ञापकत्वेन श्रीरामेतिपदस्य तत्पू-[1]र्वेण परमतत्वपदेनैवान्वय उपपद्यते ॥ नतुतदुत्तरत्वेन[2] परंजाप्यपदेनप्र-योजनाभावात् ॥ परंजाप्यपदेन तस्यान्वयः परंजाप्यतारकस्य षडक्षर-राममंत्रत्वज्ञापनार्थकः । इतिचेन्न श्रुतिस्मृतिषु षडक्षररामंत्रस्यैव तारकब्रह्मसंज्ञकत्वश्रवणात् ॥ अन्येषां भगवन्मत्राणां मध्येकस्यापि मंत्रस्यतारकब्रह्मसंज्ञकत्वाश्रवणाच्च ॥ तारकब्रह्मसंज्ञकस्य राममंत्र-त्वप्रसिद्धेः । तस्मात्पूर्वपदेनैव तस्यान्वयोव्यासस्याभिप्रेतो नतूत्तर-पदेन । उत्तरपदेन तस्यान्वयोव्यासस्याभीष्टः स्याच्चेत् ॥ तदाषडक्षरं परंजाप्यं तारकं ब्रह्मसंज्ञकमित्येवं श्रीरामेतीत्यस्य षडक्षरसूत्रकस्य स्थानेषडक्षरमिति स्फुटतया राममंत्रज्ञापकं पदंब्रूयात् । सर्वज्ञोव्यासः यतोनेत्थमुक्तं तेनातोनतस्योत्तरपदेनान्वयः ॥ किन्तुपूर्वेण परमतत्व-पदेनैवबलात्तस्योत्तरपदेनान्वयउच्यतेचेत्तदा ॥ देहलीदीपकन्यायेन तस्यपूर्वपदेन तदुत्तरपदेनचोभयत्रान्वयोवक्तव्यः केवलमुत्तरपदेनतुत स्यान्वयोनोपपद्यते ॥ विशेषशब्दद्वारैवाविशेषवस्तुनिश्चायकानां सा-मान्यशब्दानां परगुणातीतज्योतिरमलशिवपरतत्वानां श्रीरामेति वि-शेषशब्दसंबंधिना स्ववाच्यविशेषनिश्चायकत्वाऽनुपपत्तेः ॥ श्रोतुर्वि-शेषेण तन्निश्चयम्विना वक्तुर्विशेषेण तद्बोधोत्पादनं विनाचद्वितीय-प्रश्नोत्तरप्रवृत्यनुपपत्तेश्च[3] ॥ द्वितीयप्रश्नस्योत्तरमाह ॥ परंजाप्यमि-ति ॥ परंजाप्यंतारकं ब्रह्मसंज्ञकम् । इतिवा ॥ यत्तारकं ब्रह्मसंज्ञकमिति-प्रसिद्धं श्रुतिस्मृतिषुतदेव परंजाप्यमस्तीत्यर्थः ॥ तथा च हारीतः ॥ श्रीरामायनमोह्येतत्तारकं ब्रह्मसंज्ञकम् ॥ नाम्नांविष्णोः सहस्राणांतुल्य-एषमहामनुः ॥ अनन्ताभगवन्मंत्रानानेनतुसमाः कृताः । श्रियोरमण-

---

टि॰ (१) पूर्वेभवः पूर्व्यस्तेनपूर्व्येण ॥

(२) उत्तरेभवः उत्तरत्यस्तेन उत्तरत्येन ॥

(३) चपुनः श्रीरामइतिपदस्यपरमतत्वमितिपूर्वपदेनैवान्वयः ॥

सामर्थ्यात्सौन्दर्य्यगुणसागरात् ॥ इममेवपरंमंत्रं ब्रह्मरुद्रादिदेवताः ।
ऋषयश्च महात्मानोजप्त्वामुक्ताभवाम्बुधेः ॥ इममेव जपन्मंत्रं रुद्रस्त्रि-
पुरदाहकः । ब्रह्महत्यादिनिर्मुक्तः पूज्यमानोऽभवत्सुरैः ॥ एतन्मंत्रम-
गस्त्योवैजप्त्वारुद्रत्वमाप्तवान् । ब्रह्मत्वंकश्यपोजप्त्वा कौशिकस्त्व
मरेशताम् ॥ कार्तिकेयोमनुश्चैवरुद्रार्कगिरिनारदाः । वालखिल्यादिमु
नयो देवतात्वंप्रपेदिरे ॥ अद्यापिरुद्रःकाश्यांतुसर्वेषांत्यक्तदेहिनाम् ।
दिशत्येतन्महामंत्रं तारकंब्रह्मसंज्ञकमित्यादि । अत्रश्रीराममंत्रस्यस्फुट-
तारकं ब्रह्मसंज्ञकत्वं महामंत्रत्वंपरमंत्रत्वं विष्णवनेकसहस्रनामतुल्य
त्वञ्चोक्तंभवति । पंचरात्रेऽपि । षडक्षरं वन्हिपूर्वंतारकत्वमभिधीयते॥
महापातकिनां पाप दहनेदहनोपमइत्युक्तम् । पुराणेऽपि ॥ श्रीरामरामे-
ति ह्येतत्तारकमुच्यते । अतस्त्वंजानकीनाथपरं ब्रह्मासिनिश्चितम् ॥
मुमुर्षोर्मणिकर्ण्यन्तरर्द्धोदकनिवासिनः । अहंदिशामितेमंत्रं तारकं
ब्रह्मसंज्ञकम् ॥ रामतापनीयाश्रुतिरपि ॥ तारकं विन्दुपूर्वकं दीर्घानलं
पुनर्दीर्घानलमित्याद्याप्रत्यक्षरमुद्धृतवतीतारकस्य ॥ द्वितीयाश्रुतिस्त-
न्निरुक्तिपरा ॥ गर्भजन्मजरामरणसंसारमहद्भयाद्यस्मात्तारयति त-
स्मादुच्यते तारकमित्येषा ॥ तृतीयाश्रुतिः । यएतत्तारकं ब्राह्मणोनि-
त्यमधीतेसपाप्मानंतरतीत्याद्या ॥ एवं श्रुतयःस्मृतयश्चराममंत्रस्यैव
तारकं ब्रह्मसंज्ञकत्वंवदन्ति न भगवन्मंत्रांतरस्यकस्यापि । परजाप्य-
त्वन्तु तस्य हारीतेनकंठतउक्तंभवति ॥ तुल्यएष महामनुरिति । इममेव-
परंमंत्रमिति च दिशत्येतन्महामंत्रतारकमिति च ॥ जजापपरमंजाप्यं
रहस्येस्थितचेतसेति श्रीजानकीस्तवराजेस्फुटं श्रीराममंत्रस्यपरम-
जाप्यत्वमुक्तंभवति । उपपद्यतेचतस्यपरजाप्यत्वम् ॥ सर्वेषुमंत्रवर्गेषु
श्रेष्ठंवैष्णवमुच्यते । गाणपत्येषुशैवेषु शाक्तसौरेष्वभीष्टदम्॥ वैष्णवेष्व-
पिमन्त्रेषुराममंत्राः । फलाधिकाः ॥ गाणपत्यादिमन्त्रेभ्यः कोटिकोटि
गुणाधिकाः ॥ मंत्रस्तेष्वप्यनायासफलदोयंषडक्षरः । शान्तः प्रसन्नो-
वरदोह्यक्रोधोभक्तवत्सलः ॥ अनेनसदृशोमंत्रो जगत्स्वपि नविद्यते ।
इत्येवमगस्त्येनोक्तत्वात् ॥ अचिंत्योऽयंमहावाहो मंत्रश्चिन्तामणिर्विभो॥

विहायैनंविमूढ़ात्मा इतश्चेतश्चधावति ॥ इतिरामंप्रतिशंकरवचनात् ॥ विष्णोर्नाम्नांसहस्राणां तुल्यएषमहामनुः । अनंताभगवन्मंत्रानानेनतु-समाःकृताः ॥ इतिहारीतवचनात् ॥ सहस्रनामतातुल्यं रामनामवरा-नने । इति ॥ लौकिकाः वैदिकाःशब्दाये. केचित्सन्तिपार्वति । नामानि रामचन्द्रस्यसहस्रंतेषुचाधिकम् ॥ तादृङ्नामसहस्रै स्तु रामनामसमं-मतम् । विष्णोरेकैकनामैव सर्ववेदाधिकंमतम् ॥ तादृङ्नामसहस्रै स्तु-रामनामसमंमतम् ॥ जपतः सर्ववेदांश्चसर्वमंत्रांश्चपार्वति । तस्मा-त्कोटिगुणं पुण्यंरामनाम्नैवलभ्यते । इत्येवंशिवागस्त्यव्यासहारीता-दिभिर्विष्ण्वनेकसहस्रनामतुल्यत्वेन सर्ववेदसर्वमंत्रजपफलात्कोटि-गुणाधिकफलप्रदत्वेन चोक्तस्य श्रीराममंत्रस्याशेषमंत्रेभ्यः कोटिगु-णाधिकोत्कृष्टत्वोपपत्तेः । परजाप्यत्वमुपपद्यते ॥नपञ्चविधानां गाण-पत्यशैवशाक्तसौरवैष्णवमंत्राणांमध्येकस्यापि मन्त्रस्यपरजाप्यत्वमुप-पद्यते ॥ शिवव्यासागस्त्यादिभिस्तेषां श्रीराममंत्रात्कोटिगुणन्यूनत्वे-नोक्तत्वात् । तारकमिति॥ गर्भजन्मजरामरणसंसारमहद्भयाद्यस्मात्ता-रयति तस्मादुच्यतेतारकमितिश्रौतनिरुक्तेः गर्भादिभ्यस्तारयतिय-त्तारकमिति तस्यान्वर्थासंज्ञा[१] श्रुतिभिर्मतास्वजापकमुक्तिप्रदमित्यर्थः॥ अनेनयस्यमंत्रस्यतारकसंज्ञानास्ति स झटितिसंसारतारकोऽपिनभव-ति । संसारतारकस्यावश्यं तारकसंज्ञकत्वेनभाव्यात् ॥ तारकत्वेहेतुः ब्रह्म संज्ञकमिति ब्रह्मसम्यग्ज्ञायते येनतद्ब्रह्मसंज्ञकम् ॥ ब्रह्मणःसंज्ञास-म्यग्ज्ञानमनुभवोयस्मात्तद्ब्रह्मसंज्ञकमिति ॥ वाविशेषणाभ्यां[२] षडक्षरस्य ब्रह्मापरोक्षज्ञानदानपूर्वकसंसारात्तारयित्वास्ववाच्यरयामाख्यपरब्रह्म-प्रापकत्वमुक्तंभवति ॥ तेनमंत्रतद्वाच्ययोः समसामर्थ्यव्यक्तीकृतम् ।

---

टि० (१) तस्यषडक्षररामममन्त्रस्यान्वर्था अनुपश्चादर्थो यस्यांसंज्ञायां सान्वर्था संज्ञाश्रुतिभिर्मताउक्ता ।

(२) तारकब्रह्म संज्ञकविशेषणाभ्यां ।

(३) चपुन इति न वाच्यमित्युत्तरेणान्वयः ।

यस्मादयंमंत्रोब्रह्मणः सच्चिदानन्दात्मकं स्वरूपं साक्षाद्बोधयति। । तस्मादस्य ब्रह्मसंज्ञकमित्यन्वर्था संज्ञाभिमता ॥ नचसंज्ञाशब्दस्य नामपदपर्य्यायत्वेन ब्रह्मसंज्ञकमिति पदंषडक्षरस्य ब्रह्मनामकत्वंवदति । नतुब्रह्मस्वरूपबोधकत्वमितिवाच्यम् ॥ सम्यग्ज्ञायते वस्तुदेवतादिरूपंयया सा संज्ञा ॥ नम्यतेऽर्थो देवदत्तादिरभिधीयतेऽनेनेति नामेतिनिरुक्तेरुभयोर्नामसंज्ञयोःस्वनामिनो ज्ञेयस्यस्वरूपबोधकत्वोपपत्तेः । यथा नामिवाचकेन नाम्नायोऽभिमुखोभवेत् तथावीजात्मकोमंत्रो मंत्रिणोऽभिमुखोभवेदितिश्रुतेश्च ॥ नामोच्चारणेन नामिनस्तत्सन्मुखीभवनमन्यथानुपपद्यमानं नाम्नोनामिस्वरूपबोधकत्वमुपपादयति ॥ नामोच्चारणकृतनामिस्वरूपबोधम्विनानामिनो नामोच्चारकसन्मुखीभवनानुपपत्तेः ॥ लोकेपितस्य तस्यसंज्ञाद्वारैवतत्तत्संज्ञकस्ययाथार्थ्यबोधोभवति ॥ तन्नाम ज्ञानंविना नामिस्वरूपज्ञानानुपपत्तेः । तदुच्चारणंविना नामिसन्मुखीभवनानुपपत्तेश्च ॥ नाम्नो नामिस्वरूपबोधकत्वं तत्सन्मुखीकरणत्वञ्चोपपद्यते ॥ किंच यथालोके कश्चित्पुरुषः कस्यापिमुखादीदृशाकारवान्देवदत्तोऽस्ति । इदंचतन्नामास्तीत्येवं श्रुत्वा । यदातादृशाकारवन्तं पुरुषंपश्यति तदायज्ञदत्तोनोक्तः स देवदत्तोऽयमेवेति ज्ञात्वातन्नाम्नातमाह्वयतिभोदेवदत्तेत्येवं तदा स देवदत्तस्तत्सन्मुखीभूयतं पश्यति ॥ जानातिचायंमामाह्वयते । इति । एवं गुरुमुखाद्भगवदाकारंतन्नाम च श्रुत्वातन्नामतन्मंत्रंवाद्वयंवा जपति । ध्यायतिचतद्वाच्यस्वरूपम् ॥ तेनस्वनामोच्चारणेनोच्चार्य्यमाणोभगवान् सर्वेश्वरस्तत्सन्मुखीभूयपश्यतिजानाति च । तमयं ममनाम मंत्रंवाजपत्यतोमद्भक्तत्वान्मया सर्वथारक्षणीयोयमितिसंकल्पं च कृत्वातदभीष्टंददाति । तारयति च संसारसागरात्तंप्रापयति च सदातद्ध्यातांस्वात्मानम् ॥ तदेवंभगवन्नामतन्मंत्रश्च स्ववाच्यंभगवन्तंसन्मुखीकरोतिदर्शयति च तत्स्वरूपंप्रापयति च । तं भगवंतं च तन्नाममंत्रजप्तारं[1] दर्शयतिज्ञापयति च तमयंस्वन्नामोच्चा-

टि० (१) तं भगवन्तं प्रति भागवतं दर्शयति ज्ञापयति भगवन्नाम मन्त्रश्चेतिपूर्वेणान्वयः ।

रकस्तवक्कोस्तीत्येवं भगवतोनाममंत्रश्चस्वामिसेवकयोरुभयोः परस्परंवोधकौपरस्परंदर्शकौपरस्परं प्रीतिजनकौपरस्परंप्रापकौस्तः। इत्यवगम्यते॥ तत्र एतावान् विशेषोऽस्तिरामनामव्यतिरिक्तानि सर्वाण्यपि भगवन्नामानि गौणानिसंतीति तत्तद्व्युत्पत्त्यावगम्यते॥ तथैवोक्तंभागवतपुराणे॥ यस्यावतारगुणकर्मविडम्बनानि नामानि- येऽसुविगमेविवशागृणन्तीति॥ तत्रभक्तवत्सलकरुणाकरदयासिन्धु- कृपानिधीत्येवमादीनितद्गुणविडम्बनानि रावणारिकंसारिमुरारिदै- त्यारिखरारिमधुसूदनादीनिनामानि। तत्कर्मविडम्बनानिज्ञेयानि॥ किंच विष्णुमहाविष्ण्वादीनियानिविष्णुसहस्रनामान्युक्तानिभीष्मेण॥ तान्यपिसर्वाण्येवगौणानिसन्तीति। यानिनामानिगौणानि विख्या- तानिमहात्मनः। ऋषिभिः परिगीतानितानिवक्ष्यामिभूतये॥ इत्य- स्माद्भीष्मवचनादवगम्यते॥ तत्तन्निरुक्त्यापि तेषांगौणत्वमेवनि- ष्पद्यते॥ तथाहि॥ वेवेष्टीतिविष्णुरित्येवं विष्णुशब्दोभगवद्व्यापकत्व रूपगुणद्वाराभगवतिपर्य्यवस्यतस्य सर्वव्यापकत्वंज्ञापयति न तु चि- द्घनंतत्स्वरूपं साक्षाद्वदत्यतस्तद्व्यापकत्ववादिनः शब्दास्तेसर्वेपिवि- ष्णुशब्दवद्गौणत्वेनज्ञेयाः। नारायणशब्दोऽपिक्षीराब्ध्ययनकरणरूपभ- गवत्कर्मद्वाराभगवन्तंवोधयति नतुचिद्घनं तत्स्वरूपम्॥ नराज्जाता आपो नारास्ताअयनंगृहं यस्य स नारायण इति स्मार्तनिरुक्तेः। आ- पोनाराइतिप्रोक्ता आपोवैनरसूनवः। अयनंतस्य ताःपूर्वंतेननारायणः स्मृतइतिस्मृतेश्च॥ एवं नराज्जातानितत्वानि प्रकृतिमहदादीनि ता- न्ययनं यस्य स नारायण इत्ययमपिनारायणशब्दः सर्वतत्वव्यापक- त्वरूपभगवद्गुणद्वाराभगवन्तं सर्वतत्वव्यापकंज्ञापयति नतुतच्चि- द्घनस्वरूपं वोधयतिनराज्जातानितत्वानि नाराणीतिविदुर्बुधास्ता- नितस्यायनंपूर्वं तेननारायणःस्मृतः॥ इतिस्मृतेः॥ स्मार्तनिरुक्तेश्च तथा॥ नराणांजीवानांसमूहो नारास्तेषामयनमुपायउपेयश्च यः स नारायणइत्ययमपि नारायणशब्दः सर्वतत्वव्यापकत्वरूपभगवद्गुण द्वाराभगवंतं भगवन्निष्ठमुमुक्षुजीवोपायत्वोपेयत्वगुणवोधनद्वारा

एवभगवति पर्य्यवस्यभगवन्तंसर्वोपायत्वमुपेयत्वंचज्ञापयति। नतु-चिद्धनंतत्स्वरूपंसाक्षाद्वदति । एवंवसतिसवत्रेति वासुःसर्वान्स्व-स्मिन्वासयति वासवासुः वासुश्चाऽसौदेवश्च वासुदेवएवंवासुदेव-शब्दोऽपिसर्वत्रभगवद्वासकरणरूपतत्कर्मद्वारासर्वजीवस्ववासकार-यितृत्वतत्कर्मद्वारा च भगवतिपर्य्यवस्य तस्यसर्वभूतवासकर्तृत्वं ज्ञापयतिनतूक्तं तत्स्वरूपंवदति । एवंहरतिभक्तानांदुःखमितिहरिः प्र-लयकालेसर्वान्स्वस्मिन्हरतीतिवा हरिरितिहरिशब्दोपिभक्तजनदुःख-हरणरूपतत्कर्मद्वारा प्रलयेसर्वजीवस्वाहरणरूपतत्कर्मद्वारा च भग-तिपर्य्यवस्य तस्यस्वभक्तदुःखहारित्वं ज्ञापयतिनतूक्ततत्स्वरूपंवद-ति एवंभगवच्छब्दोऽपिउत्पत्तिंप्रलयंचैवभूतानामगतिंगतिंवेत्तिविद्या-मविद्यांच सवाच्योभगवानिति इतिवचनाद्भगवन्निष्ठोत्पत्त्यादिज्ञान-बोधनद्वारापरे ब्रह्मणिपर्य्यवस्य तस्योत्पत्त्यादिज्ञानत्वं बोधयति न तूक्तंतत्स्वरूपम्॥ एवम् ।ऐश्वर्य्यस्यसमग्रस्यधर्मस्ययशसः श्रियोज्ञान वैराग्ययोश्चैवषण्णां भगइतिस्मृतः ॥ स भगोविद्यते यस्यसभगवा-नित्ययं भगवच्छब्दः । तदैश्वर्य्यादिमत्वबोधनद्वारातस्मिन्परेब्रह्म-णि पर्य्यवस्यतस्यैश्वर्य्यादिमत्वंज्ञापयति न तूक्तंतत्स्वरूपंबोधयति। एवंज्ञानशक्तिबलैश्वर्य्यवीर्य्यतेजांस्यशेषतो भगवच्छब्दवाच्या-नीत्युक्तेर्भगवच्छब्दस्य तद्वाचकत्वोपपत्तेरतोभगवच्छब्दोपि ज्ञानश-क्त्यादितद्गुणद्वारापरेब्रह्मणिपर्य्यवस्यति तस्यज्ञानशक्त्यादिमत्वं बोधयति न तुसाक्षात्तत्स्वरूपंचिद्धनं बोधयति। भगशब्दस्य वाच्यानी तिपक्षेपिभगच्छब्दो ज्ञानादीनांवाचकः । सभगोस्यास्तीति भगवानि-त्येवमयं भगवान्शब्दोज्ञानादीनां परब्रह्म संबंधित्वमात्रत्वं बोधयति। नतु तत्स्वरूपंचिद्घनंबोधयति॥ एवं कृषिर्भूवाचकः शब्दोणश्च निर्वृति-वाचकः। तयोरैक्यंमहाविद्ये कृष्णइत्यभिधीयते॥ इत्युक्तः कृष्णशब्दोपि सदानन्दयोस्तत्स्वरूपसमानाकारयोर्गुणयोरेववाचकः। उक्तगुणद्वारा च परेब्रह्मणिपर्य्यवस्य तद्वाचकोभवति । न तु तत्परिच्छिन्नचिदात्मकं

स्वरूपंसाक्षाद्वदति ॥ न चात्र[1] सत्यंज्ञानमनन्तं ब्रह्म आनन्दो ब्रह्मेत्येव मादिश्रुतिभिः ॥ सत्यानंदयोर्ब्रह्मस्वरूपत्वावगमाद्ब्रह्मस्वरूपस्यैव वाचकः । कृष्णशब्दो नतु तद्गुणयोरित्यादिकमाशंकनीयम् । ग्रन्थादावेव ॥ रमन्तेयोगिनोऽनन्तेसत्यानन्दे चिदात्मनीत्यस्याः श्रुतेर्व्याख्याने सत्यंज्ञानमनन्तं ब्रह्म । आनन्दोब्रह्मेत्यनयोः श्रुत्योः द्वयोः । आनन्दं ब्रह्मणोविद्वान्नबिभेति कुतश्चन ॥ इत्यनयाश्रुत्यैकवाक्यताकरणेन चिदात्मनीति पदा व । सत्यानंदेइत्येवंसत्यानन्दयोः पदयोः पृथगुपादानं तात्पर्य्यविचारेण च तदनुकूलाभियुक्तिभिश्च सत्यानन्दौ ब्रह्म स्वरूपसमानाकारगुणावेव । न तु तत्स्वरूपभूताविति सुष्ठूपपादितत्वात् ॥ एवं परपुरुषोत्तमपुरुषपरमपुरुषादयः शब्दाः सर्वपुरुषेषु परब्रह्मणः श्रेष्ठत्वंबोधयन्ति,, एवं भगवतः सर्वाण्यपिनामानि परब्रह्मगुणकर्मवाचकत्वद्वारैव परेब्रह्मणि पर्य्यवस्य तस्यवाचकानिभवन्ति। नतु साक्षात्सच्चिदात्मकस्वरूपवाचकत्वेनतद्वाचकानीत्येवंमदुक्तोर्थः। तत्तन्नामव्युत्पत्तिद्वारा ज्ञातव्यो विद्वद्भिः । पदपदार्थवाक्यवाक्यार्थ विचारनिपुणैर्वैयाकरणादिभिर्विष्णुसहस्रनामादिषु यानि नामानि श्रूयन्ते । तानिसर्वाणि भगवद्गुणकर्मकृतत्वेन गौणान्येवेति भीष्म वचनादवगम्यते ॥ यानि नामानि गौणानि विख्यातानिमहात्मनः। ऋषिभिः परिगीतानितानिवक्ष्यामिभूतये ॥ इत्यस्मात् ॥ अत्र विख्यातानि ऋषिभिःपरिगीतानीत्याभ्यां यावंति लोकवेदप्रसिद्धानि ऋषिभिश्चपरिगीतानिभगवन्नामानि तानि सर्वाणिसंगृहीतानि भवन्तीत्यवगमाद्भगवत्सर्वाण्यपि नामानि सच्चिदानन्दार्थकरामनामव्यतिरिक्तानि गौणान्येवसंति न मुख्यानीत्यवगम्यते॥ एवंगणपतिशिवशक्तिसूर्य्यादीनांयानिनामानि तानिसर्वाण्यपि तत्तद्गुणकर्मनिमित्तकत्वेनगौणान्येवेति तत्तद्व्युत्पत्त्या ज्ञातव्यानिपण्डितैः । यश्च रामशब्दोविष्ण्वादिसहस्रनामादिषुपठितोभीष्मादिभिः ससच्चिदानन्दा-

टि० (१) चपुनरित्यादिकमा शंकनीयमित्युत्तरेणान्वयः।

त्मकरामाख्यपरंब्रह्म मुख्यवाचकोनास्ति। तस्यानेकविष्ण्वादिसहस्र[1] नामतुल्यत्वेनोक्तस्य सहस्रनामादिषु पाठायोग्यात्॥ यश्च तदभि-रामत्वादिगुणकर्मकृतोगौणो रामशब्दः सोऽपिन[2]। विष्णुसहस्रनामादिषु पठितः तस्यैकसहस्रनामफलदस्यापि सहस्रनामादिषु पाठानु-पपत्तेः। किन्तुतत्तत्सहस्रनामाद्यधिष्ठातृदेवताभिरामत्वादिगुणकृतः स रामशब्दः। परशुरामबलरामादिरामनामसदृशः। तत्तत्सहस्रनामाद्यधिष्ठातृदेवतावाचकः। नतुसच्चिदानन्दात्मकरामाख्यपरंब्रह्म वाचकोऽस्ति॥ वदतिहि[3]॥ रमन्ते योगिनोऽनन्तेसत्यानन्दे चिदात्मनि। इति रामपदेनाऽसौपरब्रह्माभिधीयते। इत्येषाश्रुतिः॥ रामनाम्नः परब्रह्म-सत्यानन्दगुणकानन्तचिदात्मकस्वरूपसाक्षाद्वाचकत्वम्॥अतएवतस्य तन्मुख्यवाचकत्वमुपपद्यते।तदेवं सर्वेषांपरब्रह्मपरतत्वनाम्नांविष्ण्वादीनां तथा शिवशक्तिसूर्य्य गणेशादिनाम्नां च परब्रह्मगौणनामत्वे-उपपन्नत्वे सतिरामनाम्नः परब्रह्ममुख्यवाचकत्वेसिद्धेसति च॥ यथा सर्वेऽनन्ताअपिव्यापकत्वादयःपरब्रह्मगुणास्तत्स्वरूपमाश्रित्यवर्तमानत्वेन सर्वेऽपि युगपन्मिलित्वास्वाश्रयभूतपरब्रह्मस्वरूपसमतां न प्राप्नुवन्ति। अनन्तान्यपि लोमानि। अनंतलोमाश्रयस्य शरीरस्यसमतां न प्राप्नुवंति यथा तद्वत्॥ कुतः। इति चेत्॥ अनन्तगुणाश्रयस्य पर-ब्रह्मस्वरूपस्योक्तगुणेभ्योमिलितेभ्यःसर्वेभ्योवह्वाधिक्योपपत्तेरनन्तकोटिगुणाधिकस्य तत्स्वरूपस्यैकैकगुणादनंतकोटिगुणाधिक्यस्यचोप-पत्तेः। तथैवानन्तान्यपि भगवद्गौणनामानियुगपन्मिलित्वापि रम-

---

टि० (१) तस्यसच्चिदानन्दात्मक रामाख्यस्य

(२) सोऽपिरामशब्दो भीष्मादिभिः पठितो न कुतः

(३) हियस्मात्रमन्ते इत्येषा श्रुतीरामनाम्नः परब्रह्मसदानन्दगुणकानन्तचिदात्मकस्वरूपसाक्षाद्वाचकत्वंवदति॥ अतएव तस्यरामनाम्नः तत्तस्य परब्रह्मणोमुख्यवाचकत्वमुपपद्यते॥ अत्रवदतीतिपूर्वक्रियापदेनैवान्वयः

न्ते योगिनोनन्ते सत्यानन्दे चिदात्मनि । इति रामपदेनासौ परंब्रह्मा भिधीयते ॥ इतिश्रुतेः॥ चिद्घनपरब्रह्मस्वरूपसाक्षाद्वाचकस्य ॥ ब्रह्मात्मकः सच्चिदानन्दाख्यइत्युपासितव्यमिति श्रुत्या ॥ स्वभूर्ज्योतिर्मयोऽनन्तरूपीस्वेनैव भासते ॥ इति श्रुत्याच॥ स्वप्रकाशज्योतिर्मयपरब्रह्मात्मकत्वेन चोक्तस्य षडक्षरतारकस्यरामनाम्नश्चसमतां नयांति॥ परब्रह्मस्वरूपवाचकस्यतत्स्वरूपभूतस्य च षडक्षरस्यैकस्य रामनाम्नश्च स्वरूपाश्रितगुणकर्मद्वारा तद्वाचकेभ्यस्तद्गौणनामभ्योमिलितेभ्यःकोटिगुणाधिक्यस्यैकैकगुणनाम्नःकोटिकोटिगुणाधिक्यस्यचोपपत्तेः॥ जपतः सर्ववेदांश्च सर्वमन्त्रांश्चपार्वति । तस्मात्कोटिगुणंपुण्यं रामनाम्नैवलभ्यते ॥ इतिस्मृतेः । सर्ववेदसर्वमन्त्रजपाद्यत्फलं भवति तस्मात्सर्ववेदसर्वमन्त्रजपफलात्कोटि गुणाधिकंपुण्यं रामनाम्नैव लभ्यते ॥ इत्यर्थकायाःस्मृतेः । सर्ववेदसर्वमन्त्रजपफलात्कोटिगुणाधिकप्रदत्वं रामनाम्नोऽन्यथानुपपद्यमानं[1] सर्ववेदेभ्यः सर्वमन्त्रेभ्यश्च कोटिगुणाधिक्यमुपपादयतियस्मात्तास्माद्यथा शास्त्रमुक्तं[2] मयेत्यवगन्तव्यम् ॥ अनेनैवाभिप्रायेण वेदसारज्ञाः सर्वज्ञाः शिवागस्त्यव्यासादयः षडक्षरतारकस्य रामनाम्नश्च विष्ण्वनेकसहस्रनामतुल्यत्वं भगवदनन्तमन्त्राधिकत्वं सर्ववेदसर्वमन्त्रजपफलात्कोटिगुणाधिकपुण्यप्रदत्वं चोक्तवन्तः । पद्मपुराणादिषु । लौकिकावैदिकाः शब्दा येकेचित्सन्तिपार्वति । नामानिरामचन्द्रस्यसहस्रंतेषुचाधिकम् ॥ तादृङ्नामसहस्रैस्तु रामनामसमंमतम् । विष्णोरेकैकनामैव सर्ववेदाधिकं मतम् । तादृङ्नामसहस्रैस्तु रामनामसमंमतम् । जपतः सर्ववेदांश्च सर्वमन्त्रांश्चपार्वति ॥ तस्मात्कोटिगुणंपुण्यंरामनाम्नैवलभ्यते॥ इत्येवं पद्मपुराणेभीष्मोक्त शतनाम्निशिवपार्वति सम्वादे पुरस्कृत्यव्यासेनोक्तंभवति । अत्रसकृद्रामनामजपोविवक्षितः । अन्यथा नामान्तरस्यापि

टि० (१) अन्यथानुपपद्यमानमितिकर्तृ पदमित्यत्रार्थापत्तिःप्रवर्ततेसापूर्ववद्ज्ञेया ॥ यथा देवदत्तोरात्रौ भुंक्ते इत्यादि
(२) मयायथाशास्त्रमुक्तमित्यवगन्तव्यं भवद्भिर्ज्ञातव्यम्

बहुकोटिवारजपेन तादृशफलप्रदत्वोपपत्त्या एतदुक्तव्यासवचनस्य-वैयर्थ्यापत्तेः । अत्र सच्चिदानन्दार्थकमुख्यरामनामव्यतिरिक्तानां गौणानांरामनाम्नांमध्ये एकैकस्यैकैकसहस्रनामतुल्यत्वमपिव्यासे-नोक्तम् । लौकिकावैदिकाः शब्दायेकेचित्सन्तिपार्वति । नामानि राम-चन्द्रस्यसहस्रं तेषुचाधिकमिति ॥ ईदृशश्रीरामगौणनामानेकसहस्र-तुल्यं सच्चिदानन्दार्थकमुख्यरामनामास्तीत्यपि तेनैवोक्तम् ॥ तादृङ्-नामसहस्रैस्तु रामनामसमंमतमिति ॥ विष्णोरेकमेकनामनारायण-वासुदेवहर्य्यादिकंयद्यत्सर्ववेदाधिकंमतम् ॥ तादृशानामनेकसहस्रा-णांतुल्यं रामनामास्तीत्यपितेनैवोक्तम् । विष्णोरेकैकनामैव सर्ववेदा-धिकंमतम् । तादृङ्नामसहस्रैस्तु रामनामसमंमतमिति ॥ अत्र नाम-सहस्रैरिति वहुवचनेनानेकसहस्रनामानि ॥ अथवा कोटिनामानिविव-क्षितानि । अथवा परमितानिनामानिविवक्षतानि । सर्ववेदसर्वमंत्रजप-फलात्कोटिगुणाधिकफलप्रदस्य रामनाम्नस्तत्तन्मन्त्रवीजभूतविष्ण्वा-दिकोटिनामेभ्यआधिक्योपपत्तेः । सहस्रनामफलप्रदस्यगौणनामाने-कसहस्रसमस्य रामनाम्नोविष्ण्वादिकोटिनामभ्य आधिक्योपपत्तेश्च रामनाम्नोविष्ण्वादिकोटिमन्त्राधिकत्वं विनासर्ववेदविष्ण्वादिसर्वम-न्त्रजपफलात्कोटिगुणाधिकपुण्यप्रदत्वव्यासवचनस्य वैयर्थ्यापत्तेश्च॥ अन्यथा तादृङ्नामसहस्रैरित्यस्यैकसहस्रनामपरत्वाभिप्रायस्य व्या-सस्य तादृङ्नामसहस्रेण रामनामसमंमतमित्येव वक्तव्यादिति ॥ राम रामेतिरामेति रमेरामे मनोरमे । सहस्रनामतातुल्यं रामनामवरानने ॥ इतीदमपिपद्मपुराणोक्तं व्यासवचनमस्ति । अत्रापि तादृङ्नामसहस्रै रित्यनेन ॥ तस्मात्कोटिगुणंपुण्यं रामनाम्नैव लभ्यते ॥ इत्यनेन स सहस्रनामतातुल्यमित्यस्यैकार्थ्यात् ॥ सहस्रनाम तातुल्यमित्यस्या-

टि० (१) गौणनाम्नामनेकसहस्राणां तुल्यमेक सच्चिदानन्दार्थमुख्य रामनामास्ति

(२) तस्य तस्य विष्णुनारायणादिमंत्रस्यवीजभूतेभ्यो विष्ण्वा दिकोटि नामभ्योप्याधिक्योपपत्तेः ।

ऽनेकेषांसहस्रनाम्नां समूहः । सहस्रनामताअत्र समूहार्थेताप्रत्ययः॥ जनतापदवदिदमपिपदंबोध्यम्॥ तयासहस्रनामतया तुल्यंसहस्रनामतातुल्यमितीदृशोऽर्थोऽ्यासस्याभिप्रेतः। अन्यथा । सहस्रनामसदृशं रामनामवरानने॥ इत्येववक्तव्यात्॥ तथैवहारीतेन॥षडक्षरतारकस्यामन्तेभ्योऽपिभगवन्मन्त्रेभ्योधिकत्वमुक्तम् ॥ श्रीरामायनमोह्येतत्तारकंब्रह्मसंज्ञकम्। विष्णोर्नाम्नां सहस्राणांतुल्यएषमहामनुः । अनन्ता भगवन्मन्त्रा नानेनतु समाःकृताः ॥ श्रियोरमणसामर्थ्यात्सौन्दर्य्यगुणसागरात्। इति॥ अत्र विष्णोर्नामसहस्रस्य तुल्य इत्येवमुक्ते विष्णवनेकसहस्रनामतुल्यतास्यात्तारकस्य ॥ विष्णोर्नामसहस्राणां तुल्यइत्युक्तेविष्णुरिति यन्नामास्ति तत्सम्बन्धिनामनेकेषां सहस्रनाम्नांतुल्यतास्यात॥ विष्णोर्नाम्नांसहस्रस्येत्येवमुक्ते विष्णोरनन्तानि यानिनामानिनारायणवासुदेवहरिकृष्णनृसिंहादीनि तेषां सम्बन्धिन एकस्यैकस्य सहस्रनाम्नस्तुल्यतास्यात्। अतोविष्णोर्नाम्नां सहस्राणामित्येवमुभयत्र वहुवचनंदत्तम्। तेनयानिविष्णोरनन्तानि नामानि विष्णुनारायणवासुदेवहरिकृष्णादीनितेषां मध्ये एकस्यैकस्य सम्बन्धीनि यान्यनेकान्यनेकानि सहस्रनामानितेषां सर्वेषां तुल्यएषमहामनुरित्येषवक्तुरभिप्रायोऽवगम्यते ॥ इममेवोक्तार्थं स्फुटयामासतत्रैव स हारीतः। अनन्ताभगवन्मन्त्रानानेनतु समाःकृताः । इति। अनन्ता असंख्याका अपिभगवन्मन्त्रा युगपन्मिलिता । अपि सर्वेऽनेन षडक्षरतारकेण समाः तुल्यानकृताः शिवव्यासादिभिः। जपतः सर्ववेदांश्च सर्वमन्त्रांश्च पार्वति । तस्मात्कोटिगुणंपुण्यंरामनाम्नैवलभ्यते इत्येवमादिष्वितिज्ञेयम्॥ अतो मयापिविष्णोर्नाम्नां सहस्राणां तुल्यएष महामनुरित्युक्तमितीदृशोन्वयोत्र ज्ञातव्यः। अत्रसर्वेभगवन्मन्त्रा मिलित्वापिराममन्त्रसमतां न यांति॥ नत्वेकैकमन्त्र इति वक्तुरभिप्रायः॥अन्यथा एकोपिभगवन्मंत्रो नह्यनेनसमःकृतः । इत्येवंवक्तव्यात्॥ तथैवोक्तमगस्त्येनापि॥ सर्वेषुमंत्रवर्गेषुश्रेष्ठं वैष्णवमुच्यते । गाणपत्येषुशैवेषुशाक्तसौरेष्वभीष्टदम् ॥ वैष्णवेष्वपिमंत्रेषु राममंत्राःफलाधिकाः ।

गाणपत्यादिमंत्रेभ्यः कोटिकोटिगुणाधिकाः ॥ विनैवदीक्षांराजेन्द्रपुरश्चर्य्यां विनैवहि । विनैवन्यासविधिना जपमात्रेणसिद्धिदाः ॥ मंत्रस्तेष्वप्यनायासफलदोऽयंषडक्षरः । षडक्षरोऽयंमंत्रस्तु सर्वाघौघविनाशकः ॥ दैनंदिनं च दुष्कृत्यंपक्षमासर्तुवर्षजम् । सर्वंहरतिनिःशेषं तुलाचलमिवानलः ॥ ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च । स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च ॥ कोटिकोटिसहस्राणिह्युपपातकजान्यपि । सर्वाण्यपिप्रणश्यंति राममंत्रानुकीर्तनात् ॥ शांतःप्रसन्नोवरदोह्यक्रोधोभक्तवत्सलः । अनेनसदृशोमंत्रोजगत्स्वपिनविद्यते ॥ इत्यादिना ॥ अत्रवैष्णवेष्वपिमंत्रेषु राममंत्राःफलाधिकाः ॥ इत्यस्यराममंत्राणांवैष्णवमंत्रत्ववचनस्य सर्वेषांभगवन्मंत्राणां वैष्णवमंत्रोपलक्षणत्वात् । अन्यथाभगवन्मंत्राणां नारायणवासुदेवहरिकृष्णनृसिंहादिमंत्राणां वैष्णवमंत्रत्वानङ्गीकारे तेषांमंत्राणां सर्वेभ्योमंत्रवर्गेभ्यो वाह्यत्वोपपत्या श्रुतिस्मृतिवाह्यत्वोपपत्तेः । नारायणवासुदेवादिमंत्राः । सर्वेऽपिवैष्णवमंत्रावाच्याः । सर्वाण्यपि नारायणवासुदेवहरिकृष्णनृसिंहादीनि नामानि विष्णुनामानि च संतीति निश्चयाद्यन्मया विष्णोर्नाम्नामित्यस्य व्याख्याने नारायणवासुदेवहरिकृष्णादि नाम्नांविष्णोर्नामत्वमुक्तं तदुपपन्नतरम् । तदेवसच्चिदानन्दार्थकस्य रामनाम्नःषडक्षरमंत्रस्यच विष्ण्वादिनामभ्यस्तन्मंत्रेभ्यश्च कोटिगुणाधिक्यं यथा व्यासादिभिरुक्तंभवति ॥ तथैवश्रीरामचन्द्रगौणानांनाम्नां मंत्राणांचापि विष्णोरेकैकसहस्रनामतुल्यत्वमुक्तं तैरेवतत्र । तथा पद्मपुराणेव्यासेनोक्तम् ॥ लौकिकावैदिकाःशब्दा येकेचित्संतिपार्वति। नामानिरामचन्द्रस्य सहस्रंतेषु चाधिकमिति ॥ सहस्रमिति एकसहस्रमित्यर्थः । तथैवोक्तंलिंगपुराणे श्रीरामसहस्रनामान्ते ॥ एकैकं रामचन्द्रस्य नामसर्वाधिकंमतम् । सहस्रनामफलदं सर्वाभीष्टप्रदायकमिति । तथैव ॥ वैष्णवेष्वपिमंत्रेषुराममन्त्राःफलाधिकाः ॥ षडक्षरभिन्नारामंमंत्राः षडक्षरस्यतत्पृथगुक्तेः ॥ एकसहस्रगुणफलाधिकदातारः । इत्यर्थः । एकैकं रामचन्द्रस्य नामसहस्रनामफलदमित्यस्यानु-

रोधादुपपद्यते ॥ राममंत्राणां मंत्रान्तरेभ्य एकसहस्रगुणाधिकफलदातृत्वं नाममंत्रयोरेकत्वात् । तदिदं रामनाम्नः षडक्षरतारकस्य विष्ण्वादिनामभ्यस्तन्मंत्रेभ्यश्च कोटिगुणाधिक्यमन्यथानुपपद्यमानं रामनामषडक्षरमंत्रवाच्यस्य विष्ण्वादिनाममंत्रवाच्येभ्यः कोटिगुणमाधिक्यमुपपाद्य श्रीरामस्यसाक्षात्स्वयं परब्रह्मत्वं निष्पादयतीत्यवधेयम्॥ अत्र रामनाम्नस्तारकस्य च विष्ण्वादिनामभ्यस्तन्मंत्रेभ्यश्च कोटिगुणाधिक्यं तारकसंज्ञकत्वं च हेतुकृत्यतद्वाच्यस्य श्रीरामचन्द्रस्यपरतत्वं परब्रह्मत्वं यतसाधितं मयातच्चश्रुतिस्मृतिप्रमाणकमेव ॥ यतः ॥ न तस्यप्रतिमास्ति यस्यनाममहद्यशः । इत्येषा श्वेताश्वतरश्रुतिः । नाममहद्यशस्त्वंहेतुकृत्य तद्वाच्यस्यप्रतिमत्वेनानुपमेयत्वेन तत्समाभ्यधिकरहितत्वेन सर्वोत्कृष्टत्वं वदति ॥ यतश्च भगवान् शिवोपि रामनाममंत्रयोस्तारकसंज्ञकत्वंहेतुकृत्य तद्वाच्यस्य रामस्यनिर्बाधित परब्रह्मत्वमुक्तवान् ॥ श्रीरामरामेतिरामेतिह्येतत्तारकमुच्यते । अतस्त्वं जानकीनाथपरं ब्रह्मासिनिश्चितमिति । तस्यरामनाम्नोऽपिसर्वेभ्योनामभ्यउत्कृष्टत्वसर्वनामवाच्यानामादिकारणस्य परस्यब्रह्मणः स्वरूप साक्षात्संबंधेन भवतीतीममर्थं स्मृतयोवदंति ॥ यन्नामसंसर्गवशाद्विवर्णौ नष्टस्वरौमूर्ध्निगतौस्वराणाम् । तद्रामपादौहृदयेनिधायदेही कथं नोर्द्ध्वगतिंप्रयाति ॥ ऐकांगसंगिनी गंगापावयेदखिलंजगत् । अंगप्रत्यंगसंव्यापि नामकिंकर्तुमक्षमम् ॥ इत्येवमाद्याः । तस्मान्नामपरत्वेन हेतुनातन्नामीपरत्वं निष्पद्यते ॥ सर्वपरवाच्यसंबंधेनहेतुना तत्साक्षाद्वाचकस्य नाम्नः सर्वनामभ्यः परत्वंनिष्पद्यते ॥ चतद्गुणकर्म संबंधिभ्योनामभ्यस्ततत्स्वरूपसंबंधिनोनाम्नो यावत्सर्वगुणेभ्यस्तदाश्रय भूतस्यस्वरूपस्याधिक्यंनिष्पद्यते ॥ चेत्यभिप्रायेणैव परतत्वपरब्रह्मात्मतचित्स्वरूपसाक्षाद्वाचकस्य ब्रह्मात्मभूतस्य च रामनाम्नः

टि० (१) अत्रपूर्ववदर्थापत्तिर्ज्ञातव्या ॥ २ ॥
(२) तदाधिक्यमुपपद्यते ॥

षडक्षरस्य च परब्रह्मगुणकर्मद्वारातद्वाचकेभ्यो विष्णवादिनाममंत्रेभ्यः कोटिगुणाधिक्यमुक्तवन्तः सर्वज्ञाः शिवव्यासादयः।
तद्दिदंरामनाम्नः षडक्षरस्य च नामान्तरेभ्योमन्त्रांतरेभ्यश्च कोटिगुणाधिक्यं तत्कोटिगुणाधिकपुण्यप्रदत्वं च तत्तारकसंज्ञकत्वं[1] चान्यथानुपपद्यमानं नामान्तरमंत्रांतरजापिभ्योरामनामतारकमंत्रजापिनां शीघ्रतरसंसारनिवृत्तिं ज्ञापयन् वर्तमानस्यैव देहस्यान्ते रामाख्यपरब्रह्मप्राप्तिंज्ञापयतीति॥ नामान्तराणांमंत्रांतराणां च राममनाममंत्राभ्यामनेकसहस्रगुणन्यूनत्वंतारकसंज्ञाहीनत्वञ्च ॥ मुक्तिप्रदत्ववचनं च तज्जापिनां वर्तमानदेहान्ते मोक्षाभावंदेहान्तरांते मुक्तितदुपास्यदेवताप्राप्तिं च ज्ञापयतीति॥ तस्यतेषां[2] च फलविशेषोपि ज्ञातव्यः॥ अन्यथा सर्वेषां नाम्नांमन्त्राणां च तुल्यफलप्रदत्वस्वीकारे रामनामतन्मंत्रयोर्नामांतरमन्त्रांतरेभ्यः कोटिगुणाधिकपुण्यप्रदत्ववादिशिवव्यासादिवचनानां वैयर्थ्यापत्यातदुक्तानां पुराणेतिहासादीनांवैयर्थ्यापत्तेस्तारकस्यगर्भजन्मजरामरणादिभ्यो यस्मात्तारयति तस्मादुच्यते तारकमितिश्रुतिनिरुक्तायाः॥ तदन्वर्थायास्तारकेतिसंज्ञाया वैयर्थ्यापत्तेश्च यथा तारकजापिनां वर्तमानस्यैव देहस्यान्ते श्रीरामप्राप्तिर्भवति॥ तथा सुष्ठूपपादितमस्माभिः। श्रीरामतापनीयभाष्ये ॥ य एतत्तारकंब्राह्मणो नित्यमधीते स पाप्मानं तरततिस्याः श्रुतेर्व्याख्याने॥ इत्यलमति विस्तरेण॥ ननुमुक्तिबाधकानां संसारप्रदानां ब्रह्महत्यादि पापानां विद्यमानत्वेकथं तारकस्यसंसारतारकत्वंस्यादित्याशंक्याह॥ ब्रह्महत्यादिपापघ्नमिति॥ स्वजापकस्य ब्रह्महत्यादि नाशकं ब्रह्महत्यादिपापविनाशपूर्वकं संसारतारकमित्यर्थः ॥ किमत्रप्रमाणमित्यपेक्षायामाह॥ इति वेदविदोविदुरिति[3]॥ वेदविदांस्मृतयः तन्मूलभूताश्च

---

टि० (१) अत्रपूर्ववदर्थापत्तिर्ज्ञातव्या।
टि० (२) तस्यषडक्षरस्य तेषां मन्त्रान्तराणाम्।
(३) वेदविदांशिवागस्त्यव्यासादिस्मृतयस्तासांस्मृतीनांमूलभूताः कारणभूताः॥ २॥

श्रुतयोऽत्रप्रमाणमित्यर्थः ॥ अत्रेतिवेदविदो विदुरित्यनेन व्यासेनास्य तारकस्यषडक्षररराममन्त्रस्य वैदिकत्वंज्ञापितंभवति ॥ अन्यथा ॥ इति शास्त्रविदोविदुः । इति तंत्र विदो विदुरित्येवं व्यासस्योक्तिः स्यात् रुद्रस्तारकं ब्रह्मव्याचष्टे ॥ तारकं दीर्घानलंविन्दुपूर्वकं पुनर्दीर्घानलम्॥ यस्माद्गर्भादिभ्यस्तारयति तस्मादुच्यते तारकमिति ॥ य एतत्तारकं ब्राह्मणोनित्यमधीतेस पाप्मानं तरति ॥ स ब्रह्महत्यांतरति । स भ्रूण-हत्यांतरति । इत्येवमाद्याः श्रुतयः षडक्षरतारकस्य स्वरूपं तन्निरुक्तिं च वदंति ॥ तस्यसर्वपापतारकत्वं मुक्तिप्रदत्वं चवदन्ति॥ तस्मादस्य षडक्षरतारकराममन्त्रस्यबहुश्रुतिप्रतिपाद्यत्वेनवैदिकवैदिकत्वनिष्पत्तेः येऽस्यषडक्षरस्य राममन्त्रस्यावैदिकत्वं तांत्रिकत्वं च वदतितेऽनालोचितरामतापनीयादिश्रुतिसंदर्भत्वेन पण्डितमानिन एव नतु पण्डिताः किंतुमूर्खाएवेति मंतव्यम् ॥ वेदविद्भगवानगस्त्यः । षडक्षरस्य ब्रह्महत्यादिपापघ्नत्वमाह ॥ वहुधा राममन्त्रोयंसंस्कारान्नैववांछति । रशनास्पृक्फलत्येववह्निरसंस्कृतो यथा ॥ शांतःप्रसन्नोवरदोह्यक्रोधोभक्तवत्सलः ॥ अनेन सदृशोमन्त्रोजगत्स्वपि न विद्यते ॥ सर्वेषुमंत्रवर्गेषु श्रेष्ठंवैष्णवमुच्यते । गाणपत्येषु शैवेषुशाक्तसौरेष्वभीष्टदम् ॥ वैष्णवेष्वपि मन्त्रेषुराममन्त्राः फलाधिकाः । गाणपत्यादिमंत्रेभ्यः कोटिकोटिगुणाधिकाः ॥ विनैवदीक्षांराजेन्द्र पुरश्चर्य्यां विनैवहि विनैवन्यास विधिनाजपमात्रेणसिद्धिदाः ॥ मन्त्रस्तेष्वप्यनायासफलदोऽयं षडक्षरः । षडक्षरोऽयं मन्त्रस्तुसर्वाघौघविनाशकः ॥ दैनंदिनंश्च दुष्कृतंपक्षमासर्तुवर्षजम् । सर्वंहरति निश्शेषंतुलाचलमिवानलः ॥ ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च । स्वर्णस्तेयसुरापानगुरुतल्पायुतानिच कोटिकोटिसहस्राणिह्युपपातकजान्यपि अन्यानियानिपापान्यनादिजन्मकृतानि च ॥ मातृपितृवधादीनि तद्गमनोद्भवानि च । सर्वाण्यपिप्रणश्यन्ति राममन्त्रानुकीर्तनादितीत्यादिना ॥ एतन्मूलभूताश्रुतिरपितारकस्य ब्रह्महत्यादिनाशकत्वं मुक्तिप्रदत्वंचाह ॥ यएतत्तारकं ब्राह्मणोनित्यमधीते स पाप्मानं तरति स मृत्युंतरति स भ्रूणहत्यांतरति स

ब्रह्महत्यांतरति स वीरहत्यांतरति स सर्वहत्यां तरति स संसारंतर-
तिस सर्वंतरति सोविमुक्तात्माश्रितोभवति स महान्भवति सोऽमृतत्वं
च गच्छति । इति ॥ ६ ॥

## श्रीरामरामेति जना येजपन्ति च सर्वदा ।
## तेषांभुक्तिश्च मुक्तिश्च भविष्यति न संशयः॥७॥

एवं श्रीराममन्त्रमहिमानमुक्त्वाथ तन्नाममहिमानमाह ॥ श्रीरा-
मेति ॥ श्रीरामरामेति एतद्व्यक्षरं येजनाःनित्यदाजपंति च शब्दाच्चि-
तयंति च तेषांभुक्तिरैहिकं सुखंधनदारपुत्रराज्यादिलाभः । मुक्तिश्च
संसारछेदपूर्विकाश्रीरामपदप्राप्तिर्भविष्यत्यत्रसंशयो नास्ति ॥ रामे-
तिवर्णद्वयमादरेणसदाजपन् जंतुरुपैतिमुक्तिम् । कलौयुगे कल्मषमा-
नसानामन्यत्र धर्मेखलुनाधिकार इति । अग्निपुराणेऽपितथैवोक्तम् ॥
अग्निष्टोमादिकर्माणिसापायानि[1] कलौयुगे। गङ्गास्नानंहरेर्नामनिरपाप-
मिदंद्वयम् ॥ महाभारतेऽपि ॥ जपस्तुसर्वधर्मेभ्यः परमोधर्मउच्यते ।
अहिंसया च भूतानांजपयज्ञःप्रशस्यते इति ॥ वायुपुराणेपि ॥ एकांग-
संगिनो गङ्गापावयेदखिलंजगत् । अङ्गप्रत्यङ्गसंव्यापि नामकिंकर्तुम-
क्षममिति ॥ ब्रह्मपुराणे ॥ सर्वधर्मबहिर्भूतोभुञ्जानोवाइतस्ततः । कदा-
चिन्नारदंदुःखंनामवक्तानपश्यति ॥ श्रीरामनामस्मरणे मानसंयस्यव-
र्तते। तस्यवैवस्वतोराजाकरोतिलिपिमार्जनम् ॥ अवशेनापि यन्नाम्नि
कीर्तितेसर्वपातकैः । पुमान्विमुच्यतेसद्यः कुरुध्वंनात्रसंशयः ॥ यन्ना-
मकीर्तितभक्त्याविलापनमनुत्तमम् । मैत्रेयसर्वपापानां धातूनामिव-
पावकः ॥ समायालंजलंवह्नेस्तमसोभास्करोदयः ॥ शान्तिः कलावघौ-
घस्यनामसंकीर्तनं हरेः ॥ ब्रह्मपुराणे व्यासवचनम् ॥ द्विजोवाराक्षसो-
वापि पापीवाधार्मिकोपिवा । रामरामेतियोवक्ति समुक्तोनात्रसंशयः॥

---

टि० (१) अपायोविघ्नस्तत्सहितानिसापायानि ।

विष्णुधर्मोत्तरेऽपि ॥ अनुक्तगतयोमर्त्या[1] भोगिनोपि परंतप । ज्ञानवैराग्यरहिता ब्रह्मचर्य्यादिवर्जिताः ॥ सर्वधर्मोज्झिताविष्णोर्नाममात्रैकजल्पकाः। सुखेनयांगतिंयांति न तांसर्वेऽपिधार्मिकाः ॥इति स्कन्दे॥ यामलेऽपि ॥ श्रीरामनामाक्षरमंत्रवीज संजीवनीचेन्मनसिप्रविष्टा । हालाहलम्वाप्रलयानलम्वामृत्योर्मुखंवाविशतां कुतोभीः ॥ आकृष्टिःकृत चेतसांसुमहतामुच्चाटनं चांहसामाचांडालममूकलोकसुलभं वश्यं च मुक्तिस्त्रियः। नोदीक्षां न च दक्षिणां नपुरश्चर्य्यामनागीक्षते मन्त्रोऽयंरशनास्पृगेवफलति श्रीरामनामात्मकः ॥ मंत्राः[2] संति सहस्रशोऽत्रसर्वे क्लेशेन कामप्रदाः। कोप्यश्राविसखेश्रुतोपि विकलैःसारूप्यमुक्तिप्रदः। कोसावित्यभियासि संशयमथ पृच्छस्वकाशीपुरप्रांते कंचनपर्य्यटन्त मनिशंदिग्वाससंतापसम् ॥ आश्वलायनीश्रुतयोप्याहुः ॥ तमुस्तोतारः

---

टि॰ (१) वेदादिभिर्निरुक्ताअनुक्तावेदवाह्यागर्हिता गतिर्येषांतेअनुक्तगतयोमर्त्या मरणधर्मकाः।

(२) हेसखे अत्रास्मिनलोकेसहस्रो मंत्राःसंति तेसर्वेमंत्राः क्लेशेन वहुकालकायादिभिः श्रमकृतेन कामप्रदाभवंति । विकलैः व्याकुलैरपिपुरुषैः श्रुतः श्रवणः कृतः सारूप्यमुक्तिप्रदोमंत्रः कः, अपित्वया अश्राविश्रुतोऽस्ति ॥ असौसारूप्य मुक्तिप्रदोमन्त्रः कः कस्यदेवस्यकिंनामास्ति। इत्याकांक्षायामाह ॥ त्वंकाशीपुरप्रांते अनिशंसर्वदापर्य्यटन्तंदिग्वाससंदिग्दिश एव वासांसियस्यतम् ॥ तापसंतपः कर्तुं शीलमस्यास्तीति तापसंकंचन पुरुषं श्रीमहादेवं प्रत्यभियासि गच्छ अथानन्तरंतंप्रतिस्वसंशयं प्रच्छस्वस श्रीमहादेवस्तारकषडक्षर श्रीराममन्त्रस्य प्रभावं वेत्ति तन्मन्त्रप्रभावेण काश्यांमृतानांसर्वजंतूनांमुक्तिंददाति, अतः स एव तवसर्वसंशयंदूरीकरिष्यतीत्यभिप्रायः ॥ २ ॥

पूर्वंयथाविदः। ऋतस्यगर्भंजनुषापिपर्तन॥ आस्यजानन्तो नामचिद्वि-विक्तनमहस्ते विष्णोसुमतिंभजामहे॥ अस्यार्थः॥ हेस्तोतारःश्रुतिकु-शलास्तंपरमात्मानं जनुषामनुष्यजन्मनापिपर्तनस्तुत्याप्रीणयन्तःप्रीतिं प्रापयंतः॥ अथवास्तोतारः॥स्तुध्वमितिविपरिणामः किंलक्षणंतंपूर्व्यमना दिम्॥नन्वनादेःपरमेश्वरस्यस्तुतौवयमसमर्थाइतिचेत्तत्राह॥यथाविद: यथाजानीतयथाज्ञानमित्यर्थः॥ पुनःकथंभूतम्॥ऋतस्यगर्भम्। ऋतस्यो-पनिषद् ज्ञानस्यगर्भंजठरेवर्तमानम्॥ यद्वाऋतस्याज्ञानाद्युपलक्षितप-चमहाभूतभौतिकप्रपचस्यगर्भम्॥अन्तर्यामिणम्। सर्वत्रजगतिवाह्या भ्यंतरे च व्यापकत्वेनवर्तमानम्॥ अन्तर्वहिश्चतत्सर्वं व्याप्यनाराय-णःस्थित इतिश्रुत्यन्तरात्॥ हेजानन्तःज्ञातारः अस्यभगवतोनामआ-ईपत्॥ विविक्तन् वदन्तुकीर्तयन्तु। कथंभूतचित्। चिदात्मकंपुनः किं-लक्षणंवृहद् व्यापकम्। चिद्वृहद्ब्रह्मात्मकं तुषडक्षरतारकमेव न मन्त्रा-न्तरम्। ब्रह्मात्मकाः सच्चिदानन्दाख्याइति रामतापनीयश्रुतेः। षडपि तारकवर्णाब्रह्मात्मका ब्रह्मस्वरूपभूताः। ननु जडस्वरूपाणां वर्णानांकथं सच्चिदानन्दात्मकब्रह्मस्वरूपत्वमुपपद्यते॥ इत्याशंक्याह॥ सच्चिदानन्दाख्याइति॥ नेमेतारकषडक्षरवर्णाजडात्मकाः किन्तु स-च्चिदानन्दपदेनाख्यायन्तेइति सच्चिदानन्दाख्याः। अथवा। सच्चिदान-न्दाइति आख्यासंज्ञानामयेषां ते सच्चिदानन्दाख्याः सच्चिदानन्दपद-वाच्या ब्रह्मवत्सच्चिदानन्दस्वरूपा इत्यर्थः॥ अत एतच्छ्रुत्युक्तं चि-द्वृहन्नामरामनामैवनान्यत्। वृहदित्यस्यस्थानेमहः इतिपाठे॥ प्रका-शरूपम्॥ तदपिप्रकाशरूपत्वं रामनाम्नएवोपपद्यते नान्यनाम्नः। स्वभूर्ज्योतिर्मयोनन्तरूपी स्वेनैवभासते॥ इतिरामनामपररामतापनीय-श्रुतेः॥ नारायणादिनामानि कीर्तितानि वहून्यपि। आत्मातेषांतु-सर्वेषां रामनामप्रकाशकः। इतिस्मृतेश्च॥ अतएव हेविष्णो व्यापन-शीलतेत्वांभजामहे॥ कथंभूतंत्वांसुमतिम्॥ नामोच्चारणेन सुष्टुम-तिर्यस्मात्ससुमतिस्तंत्वांसेवयामहे॥ इतिप्रार्थयन्तीत्यर्थः। अन्यापि-श्रुतिः। मर्त्या अमर्त्यस्यतेभूरिनाम मनामहेविप्रासो जातवेदसइति॥

अस्याअर्थः । हेचित्स्वप्रकाशनामकब्रह्मवयंमर्त्यामरणधर्मकाः ॥ अम-र्त्यस्यमृत्युरहितस्य नित्यस्यपरमात्मनस्ते तवभूरि वारंवारं यथाभ-वति ॥ तथानाममनामहे मननरूपेणचिंतयामहेइत्यर्थः । नामस्मरणेन-कर्मणावयंविप्रासः । ब्राह्मणाभवामः । विप्राइतिवक्तव्ये विप्रासइति छान्दसःप्रयोगः । किंलक्षणावयम् ॥ जातवेदसः । अग्नितुल्याः । त्वद्भ-क्त्या नामकीर्तनेनतेजिष्ठास्ततश्चपापक्षयाच्चित्तशुद्धिद्वारा ज्ञानवन्त इत्यर्थः । ज्ञानमार्गं च नामतइति रामतापनीयश्रुतेः । भगवन्नामदीप्ता-ग्निदग्धदुर्जातिकिल्बिषः । श्वपचोऽपिवुधैः पूज्योनवेदाढ्योपिनास्तिः-कः ॥ इति स्मृतेश्च । अन्यापिश्रुतिः । त्रिदेवः पृथिवीमेषएतांवि-चक्रमे शतर्चसंमहित्वाप्रविष्णुरस्तु तवसस्तवीयान् नत्वेषं ह्यस्यस्थ-विरस्यनामेति ॥ अस्यार्थः ॥ त्रिःत्रेधादेवोद्योतनात्मकःपृथिवीं एतां-विचक्रमेक्रमितवान् ॥ एषप्रविष्णुर्वाह्याभ्यन्तरः । वहिरन्तर्व्याप्तः । स्त-वीयान् स्तवनयोग्यः । सविष्णु नामएवतवास्तुनत्वेषमेतत् । अस्यनाम तवास्तुकिं तु अस्यस्थविरस्यनाममास्त्वित्यर्थः ॥ हेशतर्चत्वात्वां संमहिसम्यक्पूजयामि ॥ इतीमाअश्वलायनशाखोक्ताःश्रुतयः । इति ज्ञातव्यम् । हरिर्हरतिपापानि दुष्टचित्तैरपिस्मृतः । अनीक्षयापिसंपृ-ष्टो दहत्येवहिपावकः।नतावत्पापमस्तीह यावन्नाम्नांहतंहरेः । अतिरेक-भयादाहुःप्रायश्चित्तान्तरंवुधाः ॥ नाम्नोऽस्यतावतीशक्तिः पापनिर्दह-नेहरेः । यावत्कर्तुं न शक्नोतिपातकंपातकीजनः ॥ पाद्मेहनुमद्वाक्यम् ॥ तावद्गर्जतिमदस्तेषांमहापातकदन्तिनाम् । यावन्न श्रूयतेरामनामपंचा-ननध्वनिः ॥ सर्ववेदेतिहासानांसारार्थोयमितिस्फुटम् । यद्रामनाम-स्मरणंक्रियते पापतारकम् ॥ स्कन्दपुराणेनिर्वाणखण्डे ॥ श्रीरामगी-तायांमहादेवोक्ताः ॥ रामनाममहिमाप्रकाश्यते । मुमुर्षोर्मणिकर्ण्यन्तर-र्द्धोदकनिवासिनः । अहंदिशामितेमंत्रंतारकं ब्रह्मसंज्ञकम् १ अचिन्त्योयं महावाहो मंत्रचिन्तामणिर्विभो । विहायैनं विमूढात्माइतश्चेतश्च धा-वति २ अग्निषोमौजगद्योनिविन्दुनादौक्षराक्षरौ । तारकस्तदतीतस्त्वं परमात्मा निरन्जनः३ततत्त्रयमिदं गुह्यमेकीकृत्यरहस्यमूर्द्धनि । स्वयंज्यो-

---

टि० (१) कीर्तयामहे ॥ १ ॥

तिः प्रपश्यन्तियद्गत्वा न निवर्तते ४ तत्वत्रयमित्यस्यार्थः। रकारअ-कारश्च मकारश्चेतीदंतत्वत्रयंगुह्यम्। रुद्रब्रह्मविष्ण्वग्नि सूर्य्यसोमात्मकत्वेनाज्ञातत्वाद्गुह्यम्॥ एकीकृत्यरकारादीनित्रीण्यप्यक्षराणि एकीकृत्यरामित्येकरूपं कृत्वेत्यर्थः॥ स्वभूर्ज्योतिमयोऽनन्तरूपी स्वेनैव भासते इत्यनयारामतापिनीयाश्रुत्या वह्निवीजस्यस्वप्रकाशज्योतिर्मयत्वोक्तेस्तद्रामित्येकाक्षरं स्वरूपंस्वमूर्द्धनिसहस्रदलपद्ममध्येकर्णिकायांध्यायन्तो योगिनः स्वयंज्योतिस्त्वांप्रपश्यंति॥ यज्ज्योतिरमलंशिवम्। ज्योतिर्मयंराममहंभजामीति रामस्यज्योतीरूपत्वोक्तेः। रामचन्द्रश्चिदात्मकइतितस्यस्वप्रकाशज्योतिश्चिदात्मकत्वश्रुतेश्चयत्स्वयंज्योतिस्त्वांगत्वाप्राप्यननिवर्तते। अस्मिन्संसारेनागच्छन्तीत्यर्थः॥नसपुनरावर्तते न सपुनरावर्तते॥ इतिछान्दोग्यश्रुतेः। अनावृत्तिः शब्दादनावृत्तिः शब्दादितिव्याससूत्राच्च॥ अत्रछन्दसिव्यत्ययोवहुलमितिसूत्रेणनिवर्तन्ते इति वहुवचनस्थानेनिवर्तते इत्येकवचनंज्ञेयम् ४ रुद्रोऽग्निरुच्यतेरेफोविष्णुः सोमोमउच्यते। तयोर्मध्यगतोब्रह्मात्वाकारोरविरुच्यते।५अस्यार्थः। रुद्रोऽग्निश्चप्रलयकर्तारौरेफरूपावुच्यते॥इत्यर्थः॥ विष्णुःसोमश्च जगत्पालकौ मकाररूपावुच्यते॥ ब्रह्मारविश्च जगत्स्रष्टिकर्तारौरेफमकारमध्यगताऽऽकाररूपावुच्येते इत्यर्थः५ ज्योतींपिकवलीकृत्यत्रीण्याकाशोविभुःस्वयम्॥ नादोऽभिव्यक्तेसन्मात्रंत्वामेव परमेश्वरम्। ६। अस्यार्थः। रेफारूढामूर्तयःस्युः शक्तयस्तिस्रएवच। स्वभूर्ज्योतिमयोऽनंतरूपीस्वेनैवभासते॥ इत्येवमादिश्रुतिभ्यः। रकाराज्जायते व्रह्मारकाराज्जायतेहरिः। रकाराज्जायते शंभूरकारात्सर्वशक्तयः॥ आदावन्तेतथामध्येरकारेषुव्यवस्थितम्। विश्वंचराचरं सर्वमवकाशेननित्यशः॥ वीजेयथास्थितोवृक्षः शाखापल्लवसंयुतः। तथैवसर्ववेदाहिरकारेषुव्यवस्थिताः॥ यथा करण्डेरत्नानिगुप्तान्यज्ञैर्नदृश्यते। तद्वन्मंत्रांश्चवेदांश्चरकारेषु व्यवस्थिताः। अत्रछन्दसिव्य-

---

द्वि० (१) त्वद्रूपंवा

स्त्वयोवहुलमिति अनेनदृश्यन्तेइति वहुवचनस्थानेदृश्यतेइत्येकवचनं ज्ञेयम् ॥ रकारमैश्वर्य्यवीजंतुमकारस्तेनसंयुतः । अवधारणयोगेनरामो यस्मान्मनुःस्मृतः ॥ सर्ववेदाश्रयत्वाच्चसर्वलोकस्यकारणात् । ईश्वरप्रतिपाद्यत्वादखण्डब्रह्मवाचकः । इत्येवमादिपुलहसंहितादिवचनेभ्यश्च सर्ववेदसर्वमंत्राश्रयभूतो ब्रह्मादिसर्वलोकोत्पत्तिस्थितिप्रलयहेतुःअतएवाखण्डब्रह्मवाचकत्वेन ब्रह्मवत्समर्थोरेफः ब्रह्मविष्णुरुद्रात्मकानि । अग्निसूर्य्यसोमात्मकानि वात्रीणिज्योतींषि कवलीकृत्य स्वोदरीकृत्य आकाशवत्सर्वाधारोविभुः सर्वव्यापकः स्वयंरेफोनादात्मकः सन्सन्मात्रं परमेश्वरम् । त्वामेवाभिधत्तेनतुत्वत्तोऽन्यमित्येवकारार्थः ॥ तथैवोक्तमभियुक्तैः ॥ यःसहस्रारकमले[1]शब्दोस्यसनातनः । गुरुपादाब्जकृपयातंश्रुत्वा मोक्षमाप्नुयादिति ॥ रीयतेस्वयमनाहतशब्दंश्रावयतीतिरः । रीङ् श्रवणेइतिधातोरूपमन्तर्भावितणिजर्थः ॥ ६ ॥ मुख्यत्वाद्विश्ववीजत्वात्तारकत्वान्महेश्वर । त्वदंशैःस्त्रीकृतं देवैरस्माभिर्नामतेत्रिभिः ॥ ७ ॥ अस्यार्थः । रामनाम्नोमुख्यत्वान्मुखमिवग्रासकत्वात् सर्वसंहर्तृत्वादित्यर्थः । विश्ववीजत्वाद् विश्वोत्पादकत्वात्तारकत्वात् ॥ विश्वपालकत्वादित्यर्थः । त्वदंशभूतैरस्माभिर्ब्रह्मविष्णुमहेशैस्त्रिभिर्देवैस्तेतवविश्वसृष्टिस्थितिप्रलयकर्तृ सृष्टिस्थितिप्रलयकारणसामर्थ्यदश्चरामेति नामस्वीकृतंस्वस्वसृष्टिस्थितिप्रलयहेतुसामर्थ्यलाभायेतिभावः ॥ ७ ॥भार्गवोऽयंपुराभूत्वास्वीचक्रेनामतेविधिः । विष्णुर्दाशरथिभूत्वास्वीकरोत्यधुनापुनः॥ ८ ॥ संकर्षणस्ततश्चाहंस्वीकरिष्यामि शाश्वतम् ॥ एकमेवत्रिधायातंसृष्टि-

---

टि० (१)सहस्रारकमलेसहस्रदलपद्मेयोऽस्यरकारस्यसनातनोऽनादिसिद्धः शब्दोभवति ॥ असौश्रीरामदासःपुरुषो गुरुपादाब्जकृपयागुरूणां चरणकमलसेवनोद्भवगुरुकृपातस्याः कटाक्षेणतंरकारस्यशब्दमनहतनादंश्रुत्वामोक्षमवाप्नुयात । संसारबंधनाज्जीवन्मुक्तोभूत्वाश्रीरामपदसमीपंप्राप्नुयात्

स्थित्यन्तहेतवे ॥ ६ ॥ अनयोरर्थः ॥ अयं विधिर्ब्रह्मापुरापूर्वकाले भार्गवोभूत्वा ते नाम परशुरामेतिस्वीचक्रे[1] ॥ अधुनाइदानींवर्तमाने काले-विष्णुर्दाशरथिर्भूत्वा ते रामेतिनामानादिसिद्धंस्वीकरोति ॥८॥ ततः पश्चादितोभविष्यत्कालेसंकर्षणो भूत्वाहं बलरामेत्येवं तेशाश्वतनाम स्वीकरिष्यामि ॥ एकमेव ते नामसृष्टिस्थित्यन्तहेतवे सृष्ट्यादिसामर्थ्यनिष्पादनार्थत्रिधायातं त्रिभिरस्माभिर्ब्रह्मादिभिः स्वीकृतमित्यर्थः ॥ ६ ॥ अत्राहं दिशामिते मंत्रंतारकं ब्रह्मतारकम् ॥ तारकस्तदतीतस्त्वंपरमात्मानिरंजनः ॥ इत्येवं यं प्रत्युक्तवान्महादेवःससच्चिदानन्दार्थकरामनामवाच्योऽनादिपरतत्वपरब्रह्मभूतोरामः स एवराम स्तवराजप्रतिपाद्योदाशरथिरामः ॥ यत्परंयद्गुणातीतं यज्ज्योतिरमलंशिवम् । तदेवपरमंतत्वं कैवल्यपदकारणम् ॥ श्रीरामेतिव्यासवचनात् परंजाप्यं तारकं ब्रह्मसंज्ञकमिति तन्मन्त्रस्यैव तारकत्वोक्तेश्च ॥ रामःसत्यं परंब्रह्म रामात्किंचिन्नविद्यते ॥ इति तस्यैव वचनाच्च ॥ स एव दाशरथिरामः ॥ परात्पर तरंतत्वं सत्यानन्दं चिदात्मकम् । मनसाशिरसानित्यं प्रणमामिरघूत्तमम् इत्येवमादिभिर्दाशरथिरामस्य-परात्परतत्वत्वोक्तेः ॥ पुनर्यस्मिन्काले श्रीराममहादेवयोरयं संवादो बभूव तस्मिन्नेवकाले कश्चिद्विष्णोरवतारोदाशरथिर्बभूवयो रामनाम स्वीकृतवानितिदं विष्णुर्दाशरथिर्भूत्वा स्वीकरोत्यधुनापुनः ॥ इत्यस्माद्वचनादवगम्यते ॥ तत्राधुनास्वीकरोतीत्याभ्यां विष्ण्ववतारस्य दाशरथेरपि तत्संवादकालीनत्वमप्यवगम्यते ॥ स एव तत्रतत्र पुराणादिषुविष्णुनारायणाद्यवतारत्वेनोक्तो व्यासादिभिरित्यप्यवगम्यते ॥ उपपद्यते च तस्यैवविष्णुनारायणाद्यवतारत्वम् ॥नतुविष्णुनारायणाद्यनेकसहस्रनामतुल्यतत्कोटिगुणाधिकफलदसच्चिदानन्दार्थकरामपदवाच्यस्यास्मदुपास्यस्य परमतत्वपरब्रह्म[2] दाशरथिरामस्य ॥ इतिराम

---

टि० (१) भृगुवंशेयमदग्निपुत्रोभूत्वा ॥

(२) तुपुनरस्मादुपास्यस्य परतत्वपरब्रह्मदाशरथिरामस्य वि-

पदेनासौ परंब्रह्माभिधीयते । त्रिःभ रस्य द्वितीयस्य निष्कलस्याशरीरिणः ॥ उपासकानां कार्य्यार्थंब्रह्मणोरूपकल्पनेत्येवमादिश्रुतिभिर्वि[1]ष्णुनारायणाद्यवतारित्वेनोक्तस्य विष्णोरेकैकनामैव सर्ववेदाधिकं मतम् । ताद्दृङ्नामसहस्रेस्तु रामनामसमंमतम् ॥ जपतः सर्ववेदांश्च सर्वमंत्रांश्च पार्वति । तस्मात्कोटिगुणंपुण्यं रामनाम्नैवलभ्यते ॥ विष्णोर्नाम्नां सहस्राणां तुल्यएषमहामनुः । अनन्ता भगवन्मन्त्रा नानेनतुसमाः कृताः ॥ इत्येवमादिस्मृतिभी रामनाम्नोविष्ण्वनेकसहस्रनामतुल्यत्ववचनेन रामनामवाचस्यविष्णुनारायणादिनामवाचेभ्यः कोटिगुणाधिक्यबोधनेनोपपादितविष्णुनारायणाद्यवतारित्वस्य[2] ॥ इत्यसकृदवोचामः ॥ एतावांस्त्वत्र विशेषो ज्ञेयः । अहंदिशामिते मंत्रं तारकं ब्रह्मसंज्ञकम् । इतियं रामंप्रत्युक्तवान्महादेवः सस्वयं परब्रह्म दाशरथिरामः पूर्वकालीनोऽस्ति यस्तुविष्णुर्दाशरथिर्भूत्वेत्युक्तोविष्णववतारो दाशरथिरामः स श्रीराममहादेव संवादकालीनः । इत्युभयोरत्राविर्भावयोः कालभेदादुभयोर्दाशरथ्योरामयोरेककालीनत्वं नोपपद्यते इतिनाशंकनीयम् ॥ रुद्रोदिशति यन्मंत्रंयस्य नाममहद्यशः । यस्यनास्त्युपमाकापि तंरामंराघवं भजे इति वचनात् ॥ सूक्ष्मतत्त्वविचारेहि पुनरुक्तिर्न दोषभाक् । मण्यादीनां परीक्षादौयतो दृष्टगुणावहा ॥ अतः सर्वनिदानत्वं श्रुतिस्मृतिप्रमाणकम् ॥ पुनः पुनर्वदाम्यत्र रामस्याद्भुतकर्मणः ॥ स्मृतिपुराणेतिहासादिषु ॥ प्राणप्रयाणसमयेयस्तु नामसकृत्स्मरेत् । सभित्वामण्डलंभानोः परंपदमवाप्नुयादित्येवमादिभिः ॥ देहप्राणवियोगसमयेसकृन्नामस्मरणेन परंपदप्राप्तिरु

---

ष्णववतारत्वं नोपपद्यते इतिपूर्वेणान्वयः । स एवरामोविष्णुनारायणादीनामवतारत्वेनोक्तः ॥

(१) विष्णुनारायणादीनामवतारत्वेनोक्तस्य ॥

(२) अस्मदुपास्यस्यदाशरथिरामस्य तु विष्णुनारायणाद्यवतारत्वं नोपपद्यते इति पूर्वेणान्वयः ।

क्तामुनिभिः । क्वचित्तु । श्रीरामरामेतिजना ये जपंति च सर्वदा। तेषांभुक्तिश्चमुक्तिश्च भविष्यति न संशयः ॥ इत्येवमादिभिः सर्वदा नामस्मरणेनमुक्तिरुक्ता तैरेवव्यासादिभिर्मुनिभिः। क्वचित्तु। स्मर्तव्यः[1] संततंविष्णुर्विस्मर्तव्यो न जातुचित्॥ सर्वेविधिनिषेधाः स्युरेतयो-रेवकिंकराः ॥ इत्येवमादिभिः॥ निरंतरं भगवत्स्वरूपस्मरणमुक्तम् ॥ तत्रसर्वदा[2] भगवत्स्वरूपस्मरणाभ्यासेनान्तकालेपि तत्स्मृत्यातमेव प्राप्नोतीतिभगवतोक्तम्॥ अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम्। यः प्रयातिसमद्भावं यातिनास्त्यत्र संशयः ॥ यं यं वापिस्मरन्भावं त्यजत्यन्ते कलेवरम्। तं तमेवैतिकौन्तेय सदातद्भावभावितः॥ इति तथा.नामसकृत्स्मरणेनापि सर्वपापविनाशः परंपदप्राप्तिश्च भवतश्चे त्तर्हिसर्वदा नामस्मरणवचनं व्यर्थम् ॥ किमर्थंवेत्येवं नाद्यापिकेन पृष्टं न केनापि तदुत्तरंदत्तं न केनापि सूत्रभाष्यकारेण ॥ नवापुराणेतिहा-सादिटीकाकारेण कुत्रापि लिखितम् ॥ तथापि ॥ भगवद्भक्तानां श्री रामप्राप्तिकामानामवश्यं सर्वदातन्नामजपार्थं तदभिप्रायोऽधुनाप्रका-श्यतेस्माभिः । यद्यपि । मानसंवाचिकं पापं कर्मणासमुपार्जितम्। श्रीरामस्मरणेनैव तत्क्षणान्नश्यति ध्रुवमिति व्यासवचनात्सकृदेव तन्नामस्मरणेन सर्वपापविनाशोभवति ॥ तथापि ॥ तेन पुण्यपापात्म-[3]कानांप्रारब्धकर्मणां भोगैकविनाश्यानामविनाशात ॥ तेभ्यः पुनः पुनः क्षणे क्षणे उत्पन्नानां मानसादिपापानां पुनः पुनः विनाशाय सर्वदा

---

टि (१) सर्वविधिनिषेधाएतयोः स्मरणविस्मरणयोः किंकराःस्युः । तत्रसर्वाविधयः स्मर्तव्यस्यकिंकराः सर्वेनिषेधा विस्मर्तव्य-स्य किंकराः स्युः ॥

(२) तत्रसकृन्नामस्मरणभगवत्स्वरूपस्मरणानांमध्ये सर्वदा-भगवत्स्वरूपस्मरणाभ्यासेनान्त कालेपितत्स्मृत्यातं भग-वन्तमेवप्राप्नोति ॥

(३) तेभ्यः प्रारब्धकर्मभ्यः।

तन्नामस्मरणमुक्तम् ॥ भोगैकविनाशस्य पुण्यपापात्मकस्य प्रारब्धस्य भोगावसानकृतेऽन्तकालेतु प्रारब्धस्य विनाशात् ॥ तज्जातसंस्काराणांतद्द्वितीयजन्महेतूनां संचितपापपुण्यसहितानां वह्निवीजात्मकरामनाम सकृत्स्मरणेनैवभस्मीभावात् ॥ कारणविनाशेनद्वितीयजन्माभावात् । गत्यन्तराभावाच्च श्रीरामनामस्मरणप्रभावेण तन्नान्तरीकतयास्मृततद्वाच्यप्रभावेण च श्रीरामप्राप्तिरूपामुक्तिस्तस्य निर्बाधेत्यवधेयम् ॥ तदेवोक्तंव्यासेन ॥ तेषांमुक्तिश्च भुक्तिश्च भविष्यति न संशयः ॥ इतियेतु तद्वाच्यस्वरूपानभिज्ञा वाच्यं न स्मरन्ति किन्तुतन्नामैव जपन्ति ये चान्ये शास्त्रज्ञानविधुरावाच्यं न मन्यन्ते किन्तुनाममात्रमेवमन्यन्ते जपन्ति च नामैवतेषां का गतिरितिचेत् ॥ तेषांचंचलस्य मनसः । क्षणमपिस्त्र्यादिपदार्थचिन्तनं विनास्थितिमलभमानस्य सर्वदापदार्थान्तरचिन्तनत्वोपपत्यान्तकालेपि तस्यैवसदाचिन्तितपदार्थस्य स्त्र्यादेः स्मृत्युपपत्तेः । यं यं वापिस्मरन्भावं त्यजन्त्यन्ते कलेवरम् । तंतमेवैति कौन्तेय सदा तद्भावभावितः ॥ इति भगवद्वचनात् ॥ मृग्याशक्तमनसो भरतस्यजन्मान्तरेमृगशरीरप्राप्तिवत्सदाचिन्तितपदार्थस्यैव प्राप्तिर्भविष्यतीति तद्वारणाय, स्मर्तव्यः सततं विष्णुरितिनैरन्तर्य्येण तत्स्वरूपस्मरणमुक्तम् ॥ तर्हि यं यं वापि स्मरन्भावमित्यादिवचनात् ॥ सदास्वरूपस्मरणपरस्यान्तकालेऽपितत्स्मृत्युपपत्या सदा केवलस्वरूपस्मरणेनैव भगवत्प्राप्तिर्भविष्यति किं तन्नाम जापेनेतिचेत् ॥ रामेतिवर्णद्वयमादरेण सदा जपन्जन्तुरुपैति मुक्तिम् । कलौयुगेकल्मषमानसानामन्यत्र धर्मे खलुनाधिकार इति स्मृतेः ॥ कलौपापमयान्तःकरणानां नैरन्तर्य्येण भगवत्स्वरूपस्मरणा-

---

टि० (१) तस्मात्प्रारब्धकर्मविनाशात् तत्तस्यजीवस्यद्वितीयजन्महेतूनांजाताविर्भूसंस्काराणांपूर्वसंचिन्नामकर्मवासना, ॥

(२) अंतरेभवाआन्तरिकान्तरांतरिकानान्तरिकास्मृतिः तयानिरन्तरस्मृत्यास्मृतः तस्यरामनाम्नोवाच्यःश्रीरामस्वरूपस्तस्यप्रभावेण॥

नुपपत्तेः। कदाचित्कदाचित्स्वरूपं चिन्तयन् सर्वदा तन्नामजापपरस्य नामजापप्रभावेणान्तःकरणशुद्धिद्वारा सर्वदा तत्स्वरूपस्मरणोपपत्त्याऽन्तकालेनामनामिनोर्द्वयोरपि स्मृत्युपपत्तेरन्तकालीनतत्स्मृतिसमकाले तत्तत्वज्ञानतत्साक्षाद्दर्शनानन्तरं तद्याथात्म्यप्राप्तिर्भवतीत्यवगन्तव्यम्॥ ननु तदन्तकालस्मृतिसमकालेतत्तत्वज्ञानतद्याथात्म्यदर्शनानन्तरं भगवत्प्राप्तिर्भवतीति कुतोऽवगम्यते इतिचेत् ॥ उच्यते ॥ अनन्यचेताः सततं यो मांस्मरतिनित्यशः । तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः॥ अनन्याश्चिन्तयन्तो मां येजनाः पर्युपासते । तेषांनित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ भक्त्यात्वनन्यया शक्योऽहमेवंविधोऽर्जुन[1]। ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप ॥ भक्त्यामामभिजानाति यावान्यश्चास्मितत्वतः। ततो मां तत्वतोज्ञात्वा विशतेतदनन्तरम् ॥ इत्येषां भगवदुक्तवाक्यानामेकार्थकत्वावगमेनसततं स्मृत्यनन्यभक्तिपरभक्तिपदानांपर्य्यायवाचित्वावगमात् ॥ अनन्यभक्तिपरभक्त्योर्भगवत्तत्वज्ञानतद्याथात्म्यदर्शनान्तरं तत्प्रवेशपदबोधिततत्सायुज्यप्राप्तिहेतुत्वोक्तेस्तत्पर्य्यायभूतायाः सततं स्मृतेरपि तत्तत्वज्ञानतत्तत्वदर्शनान्तरं तत्प्राप्तिहेतुत्वोपपत्तेः[2] ॥ एवं सर्वदाभगवन्नामस्वरूपस्मरणपरस्यकस्यामप्यवस्थायामन्तकाले वा तन्नामस्वरूपस्मृतकृतभगवत्स्वरूपतत्वज्ञानतद्याथात्म्यदर्शनानन्तरं तत्प्राप्तिरितिगीतादिशास्त्रसर्ववेदवेदान्तनिर्विरोधोऽयंसिद्धान्तोऽवगन्तव्यः। अन्यथा केवलस्मरणस्यैवतत्प्राप्तिहेतुत्वस्वीकारे ॥ ऋते ज्ञानान्नमुक्तिरित्येषमादिश्रुतिविरोधःस्यात् ॥ यदि तु सदातत्स्मर्तुर्वातादिदोषेणान्तकालेतत्स्मृतिर्नस्यात्तदा तस्य का गतिरितिचेत् ॥ तदा सदातेनस्मृतो भगवान्स्वयं तं स्मृत्वा तत्साक्षात्कृत्वास्वपदंप्रापयतीति तद्वचनादेवावगम्यते ॥ यदावातादिदोषेण मद्भक्तोमां चनस्मरेत् । तदास्मरा-

---

टि० (१) विराड्रूपोऽहम् ॥

(२) भगवत्प्राप्तिर्भवतीत्यवगम्यते इति पूर्वेणैवान्वयः ॥

म्यहंभक्तं नयामिपरमांगतिमित्यस्मात् ॥ अत्रापिसर्वदा तत्स्मृतौ भगवानन्तकाले विस्मृतस्मृतिंतं ज्ञात्वास्मृत्वातं स्वयाथात्म्यदर्शनं दत्वास्वपदंप्रापयतीत्युक्त एवार्थो निष्पद्यते ॥ नचेदं नाम माहात्म्य-कथनंतत्स्तुतिमात्रं न यथार्थमित्याशंकनीयम् ॥ तत्राऽसतस्तदन्यत्र-त्यान्गुणादीन् तत्रारोप्यकथनस्य तत्स्तुतिमात्रत्वोपपत्तेः । यथा । आदित्योऽयंयूप इत्यनेनादित्यस्य चाकचक्यादिगुणान् यूपे आरोप्ययू-पस्यादित्यरूपत्वमुच्यते आदित्योऽयं यूपः । इति । न च काष्ठात्मक-स्य यूपस्यादित्यात्मकत्वमुपपद्यते । अतो आदित्योऽयंयूप इति वचनं यूपप्रशंसामात्रपरं न यथार्थकम् ॥ एवं स्ववाच्यपरब्रह्मतादात्म्यगते तत्स्वरूपभूते नन्नाम्निकस्य तदुत्कृष्टस्य तारकत्वादीन् गुणानारोप्य-नाम्नः प्रशंसामात्रं कुर्वंति व्यासादय इति वक्तव्यम् ॥ न कोऽप्यस्ति तदुत्कृष्टइति चेत्तदा यथार्थंहितत् ॥ ननु स्तुतिमात्रमतोननाममाहा-त्म्यपरवाक्यानामर्थवादत्वमुपपद्यते व्यासेन पद्मपुराणोक्तनामाप-राधाख्येग्रन्थेस्तोत्रनाम्न्यर्थवादत्वकल्पनाया नामापराधत्वकथनेन-

---

टि० (१) च पुनरिदंनाममाहात्म्यकथनंतन्नाम्नः स्तुतिमात्रंनयथा-र्थमितिनशंकनीयं तत्तस्य नाम्नः ॥

(२) तत्रतस्मिन्स्तुतौ असतः पदार्थस्यतदन्यत्रत्यान् ॥ तत्तस्मात् असत्पदार्थात्अन्यत्रभवः अन्यत्रत्यस्तान् गुणादीन् तत्रत-स्मिन् असत्पदार्थे आरोप्यकथनस्यप्रशंसावचनस्यतत्तस्य असतः पदार्थस्यस्तुतिमात्रत्वोपपत्तेः स्तुतिमात्रत्वस्य उपपत्तेः इदंश्रीरामनामकथनंस्तुतिमात्रमिति न आशङ्कनी-यमितिपूर्वेणान्वयः ॥

(३) आदित्ययूपयोस्वरूपतः परस्परविरोधेन यूपस्यादित्यस्वरू-पत्वानुपपत्तेः आदित्यनिष्ठचाकचक्यादिगुणस्ययूपानुवा-दित्वेनविधानात् । आदित्योवैयूप इत्यस्य वाक्यस्यगुण-पदार्थवादत्वमादित्यस्वरूपत्वमपपद्यते

नाम्न्यर्थवादत्वकल्पनायानिषेधाश्च ॥ सतां निन्दानाम्नः प्रथममप-राधं वितनोतुयत्तः ख्यातियातं कथमुहत्सहतेतद्विगर्हाम् ॥ शिवस्यश्री विष्णोर्यइह गुणनामादिसकलं धियाभिन्नं पश्येत्सखलुहरिनामाहित-करः ॥ गुरोरवज्ञा श्रुतिशास्त्रनिन्दनं तथार्थवादो हरिनाम्नि कल्पन-मिति ॥ नाप्यर्थवाद उपपद्यते हरिनाम्नितथाहि, यथा यूपेचाकचक्या द्यादित्यगुणदर्शनेनादित्यो यूपइत्युक्तम् ॥ न च काष्ठात्मकस्य यूपस्या-दित्यरूपत्वमुपपद्यते ॥ अत इदमादित्यो यूप इति वचनमादित्यनिष्ठ-चाकचक्यादिगुणस्य यूपनिष्ठत्ववदनेन गुणवादाख्यार्थवादत्वंभवती त्युक्तं विद्वद्भिः । यथायूपोत्कृष्टाऽऽदित्यवत् परब्रह्मणउत्कृष्टं किंचि-द्वस्तुयदिभवेत् । तदा परब्रह्मतादात्म्यगतेनाम्नितद्गुणवादकत्वेन नाममाहात्म्यपराणां वचनानांगुणवादाख्यार्थवादत्वमुपपद्यते ॥ यतो न परब्रह्मणः किंचित् तत्वमुत्कृष्टमस्त्यतो न तन्नामपरवचनानामु-क्तार्थवादत्वमुपपद्यते[१] ॥ यथाच ॥ अग्निर्हिमस्यभेषजमिति वचनस्य-प्रत्यक्षप्रमाणावगताग्निनिष्ठहिमभेषजत्वस्यानुवादित्वादनुवादाख्यार्थ वादत्वमुपपद्यते ॥ तथा न केनाप्यन्येनोक्तस्य नाममाहात्म्यस्यानु-वादिन्यः श्रुतयः । किन्तु स्वतंत्रप्रमाणाः श्रुतयः स्वयमेवयथार्थं नाम माहात्म्यं वदन्ति ॥ स्मृतयस्तु श्रुत्युक्तं यथार्थनाममाहात्म्यानुवादि-त्वेन ता अपि यथार्थवादित्वात् श्रुतिः प्रमाणेनैवप्रमाणत्वंगताः । न स्वातंत्र्येण तासांश्रुत्यर्थानुवादित्वेनाज्ञातार्थज्ञापकत्वानुपपत्तेः । अज्ञातार्थज्ञापकं प्रमाणमिति । प्रमाणलक्षणात् । श्रुतीनामेवादौ नामा-दिमाहात्म्यादीनां यथार्थज्ञानजनकत्वात् ॥ स्मृतीनां श्रुतिज्ञा-पितमाहात्म्यज्ञापकत्वात् । यथार्थज्ञानंप्रमा, प्रमाजनकं प्रमाण-

---

टि० (१) गुणवादाख्यार्थवादत्वमुपपद्यतेतेऽर्थवादाःकिलक्षणाः । इत्ये-तत्संदेहनिवृत्तये तत्तद्वाक्यव्याख्यानेनतत्स्वरूपं प्रदर्श्यतेत यथाबर्हिषिरजतं न देयमिति निषेधवाक्यमित्ययंनिषेध-शेषात्मकोऽर्थवादः सत नामपरवाक्यानांनोपपद्यते ॥

मिति, इदमपिप्रमाणलक्षणम् । श्रुतिष्वेवपर्य्यवस्यति नस्मृतिषु श्रुत्यर्थानुवादिनीषु ॥ स्मृतीनांश्रुत्यर्थानुवादित्वेऽपि नार्थवादत्वमुपपद्यते यथार्थवादित्वात् ॥ अर्थ वादास्तु न यथार्थवादिनः किन्तुवस्तुप्रशंसामात्रपराः ॥ यथाकाष्ठात्मकस्य यूपस्या[१]ऽनादित्यस्वरूपस्यादित्यस्वरूपवदादित्योवै यूपइतीदंवाक्यं न यथार्थंवदति ॥ किन्त्वयथार्थमेव॥ एवंप्रत्यक्षेणैवज्ञातस्याग्नेर्हिमभेषजत्वस्यपुनर्ज्ञापनायानिष्प्रयोजनत्वात् ॥ न्यर्थवादित्वेनाग्निर्हिमस्य भेषजमितिवचनस्यानुवादात्मकार्थवादत्वमुक्तंभवति ।। श्रुत्यर्थोपबृंहणभूताः स्मृतयस्तु श्रुतिगूढार्थस्यसर्वैर्ज्ञातुमशक्यस्य प्रकाशकत्वेनसर्वोपकारित्वेन यथार्थवादित्वेन च प्रमाणत्वंगताः। अतो न तासामर्थवादत्वमुपपद्यते ॥ तत्समानार्थकैः पदैर्वाक्यैश्चतदर्थप्रकाशनत्वं तदुपबृंहणत्वमितीदमुपबृंहणलक्षणंज्ञेयम् ॥ [२]विधिनिषेधान्यतरशेषत्वमर्थवादत्वमितीदमर्थवादस्यलक्षणम् यथा वायव्यांश्वेतमालभेत पशुकामःपुत्रकामो वा इतिविधिः । वायु-

---

(१) इदंवाक्यम् अनादित्यस्वरूपस्य यूपस्यआदित्यस्वरूपवत् कथन्सन्आदित्योवै यूप इति न यथार्थंवदति ॥

(२) विधिनिषेधान्यतरशेषत्वम् । विधिनिषेधयोर्मध्येअन्यतरस्यनामएकस्यशेषत्वमर्थवादत्वम् । सोऽर्थवादोद्विविधः एकोविधिशेषार्थवादो द्वितीयोनिषेधशेषार्थवादः । विरोधे गुणवादः स्यादनुवादोऽवधारिते ॥ भूतार्थवादस्तत् ज्ञानादर्थवादस्त्रिधामतः । एवं पञ्चविधोऽर्थवादस्तत्र चत्वारोऽर्थवादा अप्रमाणभूताः प्राशस्त्यमात्रत्वात् अन्तिमस्तुभूतार्थवादः । भूतस्यानादिसिद्धस्यभगवत्स्वरूपरूपनामगुणविभूत्याद्यर्थस्य सत्यस्य यथार्थ्येन वदनंकथनंभूतार्थवादः प्रमाणभूतः अज्ञातार्थस्यवादित्वेनसर्वोपकारित्वात् । यथार्थवादित्वेनसफलत्वाच्च प्रमाणांतरेणाज्ञातार्थो ऽपूर्वार्थ इति तल्लक्षणम् ॥

वैक्षेपिष्ठादेवतेति ॥ तच्छेषोवायोःक्षेपिष्ठत्वरूपगुणवादित्वेनगुण-वादात्मकोऽर्थवादः। यतोवायुःक्षेपिष्ठा शीघ्रफलदात्री देवताऽतोवा-यव्यांश्वेतम् ॥ पशुमालभेतइत्येवंविधितच्छेषयोरेकवाक्यताभवति ॥ इत्येवंविधिः[1] कल्पनीयः। एवंयत आदित्योवैयूपोभवत्यतोयूपंयजेत् ॥ अत्रतच्छेषः ॥ वायव्यांश्वेतमालभेत, इत्यस्यवाक्यस्यशेषःशेषोनामाङ्गं फलवत्सन्निधावफलं तदंगमितिन्यायात् ॥ अत्र वायव्यंश्वेतमालभेत-पुत्रकामः। इतीदंवाक्यंफलवद्भवति ॥ तत्समीपे वायुर्वैक्षेपिष्ठादेवता, इदंवचनमफलंदृश्यते,अतस्तदंगंभवति ॥ नामतच्छेषोभवति ॥ एवंयत आदित्योवैयूपोभवत्यतो यूपंयजेदित्येवं विधिः कल्पनीयः। एवं य-तोऽग्निर्हिमस्य भेषजमतःशीतभीतोऽग्निंनिषेवेत् ॥ इत्यत्र च विधिक-ल्पनीयः ॥ एवंयेषां येषांविधिशेषत्वमुपपद्येत ॥ तानिसर्वाण्यपि वच-नान्यर्थवादात्मकानीत्यवगंतव्यम्। भगवन्मंत्रनामपरश्रुतिषुतु ॥ ब्र-ह्मादीनां वाचकोऽयंमंत्रोऽन्वर्थादिसंज्ञकः ॥ जप्तव्योमंत्रिणानैनं विना-देवःप्रसीदति ॥ ब्रह्मात्मकाः सच्चिदानन्दाख्या इत्युपासितव्यं तदेव-ब्रह्म[2]यमुपास्यमितिचेत्येवमाद्यासुयतोजप्तव्यः। उपासितव्यम्। ज्ञेयमु-पास्यमित्येवमादयोबहवो विधयोदृश्यन्तेऽतोभगवन्नाममंत्रपरश्रुती-नां[3] विधिवाक्यत्वेन तच्छेषत्वानुपपत्त्यानार्थवादत्वमुपपद्यते ॥ तन्ना-ममंत्रपरस्मृतिवाक्येषुयद्यपि विधिर्नदृश्यते तथापिराज वचनानुवा-दिमंत्रिवचनस्यप्रमाणत्ववत् ॥ स्मृतीनामपिश्रुत्युक्तानुवादित्वेन[4]श्रुति-विधिनैव सविधित्वोपपत्तेः। श्रुतिप्रमाणेनैवसप्रमाणत्वोपपत्तेश्च न

टि॰ (१) कर्तव्यार्थोपदेशो विधिस्तद्यथाशिष्योगुरुशुश्रूषकोभवेदिति विधिः ॥ १ ॥

(२) भगवन्मंत्रनामपरश्रुतिषु इति पूर्वेणान्वयः ॥ २ ॥

(३) भगवन्नाममन्त्रपरश्रुतीनांनार्थवादत्वमुपपद्यतेइतिपूर्वेणान्वयः

(४) श्रुतीनामुक्तमर्थमनुवदतीति श्रुत्युक्तानुवादीतस्यभावःश्रु-त्युक्तानुवादित्वंतेन ॥

विधिशेषत्वं नाप्यर्थवादत्वमुपपद्यते ॥ स्मृतिकारैर्व्यासादिभिर्नाम मंत्रमाहात्म्य परवाक्यानि स विधीनिकिंनोक्तानीतिचेत् तत्रतत्प्रयोगानुपपत्ते रितिवदामः। तथाहि। यथा। अत्यन्ताऽप्राप्तस्य प्रापको विधिरपूर्वविधिः। यथाज्योतिष्टोमेनस्वर्गकामोयजेत् ॥ इत्यनेनवाक्येनवाक्यान्तरेणज्योतिष्टोमस्यात्यन्ताप्राप्तस्वर्गसाधनत्वस्य स्वर्गसाधनत्वविधानात् ॥ यजेदित्ययंविधिरपूर्वविधिरुच्यते ॥ तथा वाक्यान्तरेण नात्यन्ताज्ञातंनाममंत्रमाहात्म्यंस्मृतिभिरुच्यते ॥ किन्तुश्रुतिभिरुक्तत्वेनप्राप्तं ज्ञातमेवाऽतोऽपूर्वार्थवादित्वाऽभावेन न स्मृतिवाक्येष्वपूर्वविधिप्रयोगउपपद्यते ॥ तथा पक्षेप्राप्तस्याप्राप्तांशपूरकोविधिर्नियमविधिः। यथापक्षे प्राप्तस्य व्रीह्यवहननस्य नखविदलनकालेपि व्रीहीनवहन्यादेवेत्यप्राप्तांशपूरको विधिर्नियमविधिरुच्यते ॥ तथा वेदेपक्षेप्राप्तस्यैवनाममंत्रजपस्यकर्माद्यनुष्ठानकालेपि जपेत्ते नैव देवतादर्शनंकरोति कलौनान्येषामितिश्रुतेर्नामजपस्याप्राप्तांशपूरकत्वेर्ननियमविधिरुपपद्यते ॥ हरेर्नामैवनामैव हरेर्नामैवमेगतिः। कलौनास्त्येव नास्त्येवनास्त्येवगतिरन्यथा ॥ रामेतिवर्णद्वयमादरेणसदाजपन् जन्तुरुपैतिमुक्तिम्। कलौयुगेकल्मषमानसानामन्यत्र धर्मेखलुनाधिकार इत्येवमादिस्मृतीनाम् ॥ उक्तश्रुत्युक्तार्थस्यानुवादित्वाच्च तासांपौरुषेयाणामज्ञातार्थस्यस्वातंत्र्येण वक्तव्यत्वानुपपत्तेश्च न स्मृतिषुनियमविधिप्रयोगोप्युपपद्यते ॥ सोऽयंनामविषयको नियमविधिः ॥ कलियुगेएव न युगान्तरेषुकलौनान्येषामित्यनया श्रुत्याकलावेवकेवलनामजपनियमकारणात् ॥ कलौयुगेकल्मषमानसा-

---

टि० (१) तत्रतस्मिन्स्मृत्यादौ तत्सविधित्वप्रयोगस्य ॥ १ ॥

(२) ज्योतिष्टोमेनेत्यनेनवाक्येन नामवाक्यान्तरेण ॥ २ ॥

(३) तासांस्मृतीनांपौरुषेयाणां पुरुषसंबंधिनीनाम् ॥ ३ ॥

(४) विधिरत्यन्तमप्राप्तौनियमः पाक्षिकेसति ॥ तत्रचान्यत्र च प्राप्तौपरिसंख्येतिगीयते। शशश्चशल्लकीगोधाकूर्मः खड्गी-

नामन्यत्र धर्मेखलुनाधिकारः । कलौनास्त्येव नास्त्येव नास्त्येवगति-रन्यथेत्येवमाद्याभिः स्मृतिभिस्तथैवोक्तत्वाच्च ॥ तथा युगपदुभयप्रा-प्तावितरनिवर्तकोविधिः । परिसंख्याविधिः यथाऋतौभार्य्यामुपेया-दित्ययंविधिः । ऋतुपक्षेऽनृतुपक्षे वेत्युभयपक्षेरागतः स्वभावतः प्रा-प्तस्यस्त्रीसम्भोग स्यानृतुपक्षान्निवर्तयति ॥ ऋतावेवोपेयाद्भार्य्यांना-नृतावित्यर्थकोविधिः॥केचिद्वदन्त्ययंनियमविधिरस्तिनपरिसंख्याविधि रितितन्न यदिअवहननवद्ययारीत्यास्त्रीसंयोगस्यप्राप्तिर्नखविदलनवत् तदन्यरीत्यातदुपगमनप्राप्तिकालेपूर्वरीत्यैवभार्य्यामुपगच्छेदित्येतदर्थ कविधिवाक्यं स्यात्तदोपपद्येत तस्यनियमविधित्वम् ॥ यतोनैतदर्थकं तदतोनोपपद्यते तस्यनियमविधित्वं किंचनियमविधिः । यज्ञादौपुण्य कर्मणि श्रूयतेउपपद्यते च ॥ नपापकर्मणि श्रूयते नाप्युपपद्यते ॥ स्व-भार्य्योपगमनं न पापकर्मेति चेन्न ॥ असक्तिरनभिष्वङ्गः पुत्रदारगृहा-दिषु ॥ एतज्ज्ञानमितिप्रोक्तमज्ञानंयदतोऽन्यथेति भगवता श्रीकृष्णेन स्वपुत्रदाराद्यनभिष्वंगस्यानालिंगनस्य ज्ञानजनकत्वमुक्त्वा ॥ अज्ञानं यदतोऽन्यथेति वचनेन स्वदाराभिष्वङ्गस्याज्ञानजनकत्वेन पापकर्म-त्वज्ञापनात् ॥ ततश्चऋतौ भार्य्यामुपेयादिति विधिविहितस्यतु गम-नस्याप्यज्ञानजनकत्वेन संसारप्रदत्वोपपत्तेः । त्रिविधं नरकस्येदंद्वार मितिभगवद्वचनात् ॥ विध्यविहितस्यानृतुस्वभार्य्योपगमनस्यापि पापहेतुत्वेन नरकप्रदत्वोपपत्तेश्च पुनः । त्रिविधंनरकस्येदं द्वारनाश-नमात्मनः । कामःक्रोधस्तथा लोभस्तस्मादेतत्त्रयंत्यजेत् ॥ एतैर्विमु-

---

च पंचमः । पंचपंचनखाभक्ष्याब्रह्मक्षत्रेणराघव ॥कृतेयद्ध्या-यते विष्णोस्त्रेतायां यजतोमखैःद्वापरे परिचर्य्यायां कलौत-द्धरिकीर्तनादितिभागवते ॥

टि॰ (१) न पापकर्मणिनियमविधिरुपपद्यते इतिपूर्वेणान्वयः ॥ १ ॥

(२) नस्वभार्य्योपगमनरूपेपापकर्मणि नियमविधिरुपपद्यतेइत्यु-त्तरेणान्वयः ॥ २ ॥

क्तःकौन्तेय तमोद्वारैस्त्रिभिर्नरः। आचरत्यात्मनः श्रेयस्ततोयातिपरां गतिमित्येवमादिभिः कामस्य स्त्रीप्रसङ्गहेतोः क्रोधलोभयोश्च नरकद्वारत्वोक्त्या अतिपापात्मकत्वज्ञापनाच्चार्थतस्त्याङ्गं विनाश्रेयआचरणेनापि परगतिप्राप्तिर्नभविष्यतिइति ज्ञापनाच्च न स्वभार्य्योपगमनरूपेपापकर्मणिनियमविधिरुपपद्यते ॥ किन्तु परिसंख्याविधिना तन्निवृत्तिरेव ॥ किंच परिसंख्या नामगणना ऋतोस्तुषोडशाहानीत्युक्तेः षोडशदिनानि गणित्वाभार्य्योपगमनविधायकत्वेनास्यविधेः परिसंख्याविधित्वमेवोपपद्यते ॥ किंच ॥ लोकेव्यवायामिषमद्यसेवानित्यास्तुजन्तोर्नहितत्र चोदना ॥ व्यवस्थितिस्तासु विवाहयज्ञसुराग्रहैरासुनिवृत्तिरिष्टा ॥ आसुस्त्रीसंभोगामिषमद्यसेवासुनिवृत्तिरिष्टावेदस्येति व्यासवचनात् ॥ परिसंख्याविधेर्निवृत्यर्थफलाच्च व्यासवचनादपि ऋतौ भार्य्यामुपेयादित्यस्यपरिसंख्या विधित्वमेवावगम्यते॥ लोकेव्यवायेत्यर्थस्तु लोकेव्यवायः स्त्रीसम्भोगः आमिष सेवा च

---

(१) श्रीरामाश्वमेधेश्रीरामचन्द्रंप्रति ऋषयऊचुः ॥ ब्राह्मणेनसदाकार्य्यो याजनाध्यापनादिकम्। वेदान्पठित्वाविरजोनैत्रगार्हस्थ्यमादिशेत्॥१ऋतुकालाभिगमनोधर्मोऽयंगृहिणःपरः। स्त्रीणांवरमनुस्मृत्य यथाकाम्यथवाभवेत् २ दिवोभिगमनंपुन्सामनायुष्यंपरंमतम्। श्राद्धाहःसर्वपर्वाणि यतस्त्याज्यानिधीमता॥ तत्रगच्छन् स्त्रियंमोहाद्धर्मात्प्रच्यवतेपरात् ३ऋतुकालाभिगामीयः स्वदाररतिनिश्चयः।ससदाब्रह्मचारीहविज्ञेयस्सुगृहाश्रमी ४ ऋतोःषोडशयामिन्यश्चतस्त्रस्तासुगर्हिताः॥ पुत्रास्तास्वपियायुग्मा अयुग्माः कन्यकप्रदाः ५ त्यक्त्वाश्चन्द्रमसंदुष्टंमघामूलं विहायच। शुचिः सन्निर्दिशेत्पत्नीं पुन्नामर्क्षेविशेषतः॥ शुचिः पुत्रंप्रसूयेत पुरुषोर्थप्रसाधकः ६ अन्यत्रच्च। प्रथमेऽहनि चाण्डालीद्वितीयेब्रह्मघातिनी। तृतीयेरजकी तुल्याचतुर्थेऽहनिशुद्ध्यति ॥ ७ ॥

मद्यसेवा च नित्याः नित्यं रागतः स्वभावेनैव प्राप्ता जन्तोर्जन्तुमात्रस्यातो नित्यप्राप्तस्य प्रापणायोग्यात् ॥ तत्रव्यवायादिषु चोदना अपूर्वविधिर्नहिनास्ति ॥ किन्तु नित्यप्राप्तासुतासुव्यवायामिषमद्यसेवासुविवाहयज्ञसुराग्रहैर्व्यवस्थितिः परिसंख्या विधिनाव्यवस्थितिः । विवाहितयास्त्रिया सहभोगोनान्याभिः । यज्ञएवामिषसेवामद्यसेवाच्च कर्तव्या नान्यत्रेत्येवं व्यवस्था कृतातयाव्यवस्थया च॥ आसुइतिपञ्चम्यर्थे सप्तमीएषांव्यवायादीनांविवाहितभिन्नस्त्रीसम्भोगनिषेधद्वारातत्रापि ऋतुव्यतिरिक्तकालीनस्वस्त्रीसम्भोगनिषेधद्वारा तत्रापि गर्भधारणान्तरमृत्वभावात् अनृतौ भार्य्योपगमनाऽविधानेनतन्निषेधाच्च ॥ यावन्न पुत्रोत्पत्तिस्तावन्नवमासपर्य्यन्तं भार्य्योपगमननिषेधद्वारा पुनः पुत्रोत्पत्त्यनन्तरं सर्वदा तन्निषेधाच्चान्यथा ॥ एतैर्विमुक्तः कौन्तेयतमोद्वारैस्त्रिभिर्नरः । आचरत्यात्मनः श्रेयस्ततोयातिपरांगतिम् ॥ इत्येवमादिभगवद्वचनवैयर्थ्यापत्तेः । सन्यासविधिवैयर्थ्यापत्तेश्चसर्वदा तेषां व्यवायादीनांनिवृत्तिरेवेष्टाकेषामिष्टेतिचेत् ॥ रागतोनित्यं प्राप्तंसर्वस्त्रीसंभोगं विवाहितस्त्रीसंभोगाभ्यनुज्ञयात्याजयित्वा सर्वकालप्राप्तस्वभार्य्याभिगमनञ्चाप्यृतुभार्य्योपगमनाभ्यनुज्ञयात्याजयित्वाऋतुमात्रं भार्य्योपगनं गर्भाधानपर्य्यन्तं प्राप्तं च ॥ गर्भाधानमारभ्यपुत्रजन्मपर्य्यन्तं ऋत्वभावान्नवमासपर्य्यन्तमनृतुगमनदोषदर्शनेनत्याजयित्वा पुत्रजन्मानन्तरं संसारमुक्त्यर्थकेन सन्यासविधिना सर्वदा स्त्रीसंगत्यागहेतुभूतेन सर्वस्त्र्यादिसङ्गंत्याजयामः सूर्योदयेवेदाअध्येतव्याः तेषां व्यवायादिनिवृत्तिरिष्टेतिबोध्यम् ।

टि० (१) यथाविध्यविहितमनृतुभार्य्योपगमनं पापजनकत्वेन निषेध्यंतथा विधिविहितश्रूयमाणमृतुगमनमपि पापजनकत्वेननिषेध्यमित्युभयमत्रपापजनकत्वस्य स्त्रीगमनस्यानृतुगमननिषेधइव ऋतुगमननिषेधेऽपिविधितात्पर्य्योपपत्तेरनृतुगमननिवृत्तिद्वारात्तु गमनस्यापिनिवृत्तिरिष्टावेदानामितिबोध्यम् ॥ १ ॥

तदेवंऋतौभार्य्यामुपेयादित्यस्य विधेरपूर्वविधित्वानुपपत्तेः परिसंख्या विधिनाऽनृत्वादिस्त्रीगमननिषेधपरंपरया सर्वथासर्वदास्त्रीसंगपरि त्यागे तात्पर्य्यमस्ति वेदानामित्यवगमात् ॥ ऋतौभार्य्यामुपेयादित्य- स्यर्तावपि भार्य्योपगमनविधानतात्पर्य्यानुपपत्तेः । तात्पर्य्यानुपपत्ते र्लक्षणाबीजत्वात् ॥ ऋतौभार्य्यामुपेयादित्यस्यानृतौभार्य्यांनोपेया- दित्यभिन्नर्थेलक्षणा सोऽयंपरिसंख्याविधिर्भगवन्नाममंत्रपरवाक्ये षुनोपपद्यते सर्वदा नामजपपरवचनस्य श्रीरामरामेतिजनायेजपन्ति च सर्वदेत्येवमादेस्तन्निषेधमूलछेदकत्वात्तन्निषेधस्य क्वचिदप्यश्रव- णाच्च ॥ ७ ॥

## स्तवराजं पुराप्रोक्तं नारदेन च धीमता ।
## तत्सर्वं संप्रवक्ष्यामि हरिध्यानपुरःसरम् ॥८॥

षड्वर्णतारकराममंत्रजपांते कर्तव्योयःस्तवः सोहिनारदेनोक्त एषश्रीरामस्तवराजाभिध इतिदर्शयति ॥ स्तवराजमिति ॥ नारदेनचे- तिचकारः कुमारप्रोक्तत्वसमुच्चयार्थः । धीमतापरविद्याशालिना छा न्दोग्यनिर्दिष्टसनत्कुमारलब्धपरविद्येनेत्यर्थः । भक्तिंविनातदुक्तौ सा मर्थ्यं न स्यादितिज्ञापयति ॥ हरिध्यानेति ॥ अत्रहरिध्यानपुरःसरमि त्यस्य काकाक्षिगोलकन्यायेनस्तवराजमिति पदस्यपूर्वमप्यन्वयोद्र ष्टव्यः ॥ कृतांजलिपुटोभूत्वाचिन्तयन्नद्भुतंहरिम् ॥ इत्यादिश्लोकत्रयेण नारदकृतस्यध्यानस्यवक्ष्यमाणत्वात् ॥ अतोहरिध्यानपुरःसरं स्तवरा- जंप्रोक्तंनारदेन यत्तद्धरिध्यानसहितंस्तवराजं सर्वंसम्पूर्णमहमपिहरि- ध्यानपुरःसरं हरिध्यानपूर्वकं वक्ष्यामीत्येवमत्रान्वयोद्रष्टव्यः ॥ तत्र- नारदकृतंध्यानंचिन्तयन्नद्भुतं हरिमित्यद्युक्तंज्ञेयम् ॥ व्यासोक्तंध्या- नंतु ॥ अयोध्यानगरेरम्येरत्नमण्डपमध्यगे ॥ इत्याद्युक्तंबोध्यम् ॥ अत्रस्तवराजमितिपदं नपुंसकलिंगमवगम्यते ॥ तापत्रयाग्निशमनं सर्वाघौघनिकृंतनम् । दारिद्र्यदुःखशमनं सर्वसंपत्करंशिवम् ॥ विज्ञान- फलदंदिव्यं मोक्षैकफलसाधनम् ॥ इत्येषांतद्विशेषणानांसर्वेषां क्ली-

वत्वदर्शनात् ॥ नचेमानिध्यानपदस्य विशेषणानीतिवाच्यम् ॥ समा-
सान्तरगतस्य ध्यानपदस्यसविशेषणत्वानुपपत्तेः । वैयाकरणभूषण-
कारेण सवृतस्यविशेषणं नेतिसवृत्तपदस्यसविशेषणत्वनिषेधाच्च ॥
स्तवराजसमाप्तावपि ॥ इतिश्रीरघुनाथस्य स्तवराजमनुत्तमम् । सर्व-
सौभाग्यसम्पत्तिदायकं मुक्तिदंशुभम् ॥ १ ॥ कथितं ब्रह्मपुत्रेणवेदानां
सारमुत्तमम् ॥ इत्यत्रस्तवराजपदस्य तद्विशेषणपदानां च क्लीवत्वद-
र्शनात् ॥ कथितं ब्रह्मपुत्रेणेत्यनुक्तकर्तृकर्मभूतस्यस्तवराजमिति पद-
स्यप्रथमान्तत्वावगमाच्च ॥ यदित्वत्र ॥ इतिश्रीरघुनाथस्यस्तवराजोह्य-
नुत्तमः । सर्वसौभाग्यसंपत्तिदायकोमुक्तिदःशुभः ॥ कथितोब्रह्मपुत्रेणे-
त्येवंपाठःकर्तव्यः । आदौतु । तापत्रयाग्निशमनः सर्वांघौघविनाशनः ॥
दारिद्रदुःखशमनः सर्वसंपत्करःशिवः ॥ विज्ञानफलदो दिव्योमोक्षैकफल-
साधनः । इत्येवंपाठः कर्तव्यइत्युच्यते ॥ तदातत्सर्वंसंप्रवक्ष्यामीत्यत्र
कीदृशःपाठःकर्तव्यः ॥ जगत्प्रसिद्धाशेषस्तवराजपुस्तकपठितविपरीतः
स उच्यताम् ॥ यःस्तवराजोनारदेनप्रोक्तस्तत्सर्वं प्रवक्ष्यामीत्येवं चे-
त्तर्हितदित्यस्यस्थानेतं सर्वमित्युच्यताम् ॥ तापत्रयाग्निशमनमित्या
दीनिरघुनाथस्यस्तवराजमनुत्तममित्यादीनि च पुलिंगत्वेनवक्तव्यानि॥ [1]
तस्मात्संप्रदायागतंपाठं परित्यज्यासंप्रदाय पाठकल्पनाद्वरम् ॥ त्यजे-
देकं कुलस्यार्थेग्रामस्यार्थेकुलंत्यजेत् ॥ ग्रामं जनपदस्यार्थेह्यात्मार्थेस-
कलंत्यजेत् ॥ इतिवचनात् ॥ बहूनामनुग्रहोन्याय्य इत्येवमादिवचनेभ्य-
श्च ॥ द्वादेशक्लीवविशेषणानुसारेणैकस्यस्तवराजपदस्यक्लीवत्वक-
ल्पनम् ॥ आर्षत्वादपितस्यक्लीवत्वोपपत्तेश्च ॥ ८ ॥

**तापत्रयाग्निशमनंसर्वाघौघनिकृन्तनम् ।**
**दारिद्रदुःखशमनंसर्वसंपत्करंशिवम् ॥ ९ ॥**

---

टि० (१) स्तवराजपदस्यक्लीवत्वकल्पनंवरमित्युत्तरेणान्वयोज्ञातव्यः।

तत्रादौश्रोतृप्रवृत्तये स्तवराजस्यफलंदर्शयति ॥ तापत्रयेत्यादिचतुर्भिःपदैः ॥ दैहिकंभौतिकं च दैविकंचेतितापत्रयं तदुत्थाग्निस्तापत्रयात्मकाग्निस्तस्यशमनं शान्तिकरम् । सर्वेऽघौघाअघसमूहा ब्रह्महत्यादयस्तेषांनिकृंतनंछेदकम् ॥ दारिद्र्यादीनियानिदुःखानितेषां शमनंशान्तिकरं सर्वसंपत्करं सर्वसंपद्दायकम् । शिवंस्वयं मंगलस्वरूपम् । स्वकर्तृश्रोतृमंगलप्रदमित्यर्थः ॥ ९ ॥

**विज्ञानफलदंदिव्यं मोक्षैकफलसाधनम् ।**
**नमस्कृत्यप्रवक्ष्यामि रामंकृष्णंजगन्मयम् ।१०।**

अथ तस्यमुख्यफलंविज्ञानफलदं मोक्षैकफलसाधनमिति पदद्वयेन निर्दिशति ॥ विज्ञानंविशिष्टज्ञानं सपरिकरस्य श्रीरामस्यानुभवस्तदात्मकं फलंददातीतिविज्ञानफलदम् । मोक्षंसंसारछेदपूर्वकसपरिकरस्य श्रीरामस्यसाक्षात्कारस्तद्रूपमेकं मुख्यंयत्फलं तस्यसाधनम् । मुख्यसाधनमुख्यमुपायभूतम् । अस्यस्तवराजस्य सर्ववेदसारत्वेन सर्वसाधनश्रेष्ठत्वोपपत्तेः । ईदृशंस्तवराजमहं रामंसच्चिदानन्दार्थक रामपदवाच्यं परात्परंतत्वं सत्यानन्द चिदात्मकं यत्परंब्रह्म तदेवदाशरथिस्सन्राघवरघुनन्दनादिपदैरभिधीयमानम् । परात्परतरं तत्वं सत्यानन्दंचिदात्मकम् । मनसाशिरसा नित्यंप्रणमामिरघूत्तमम् । इत्यग्रेरघूत्तमस्यपरात्परतत्वत्व वक्ष्यमाणात्, एवंभूतंरामंनमस्कृत्य अत्र नमः पदं तद्ध्यानस्याप्युपलक्षणम् ॥ अयोध्यानगरे रम्येइत्यादिनातद्ध्यानकथनान्तरं स्तवराजस्य वक्ष्यमाणत्वात् ॥ रामंनमस्कृत्यध्यात्वा चेत्यर्थः । प्रवक्ष्यामीति । एतन्माहात्म्यकथनकालापेक्षयास्तवराजकथनकालस्यभविष्यत्कालदृष्ट्याप्रवक्ष्यामीत्युक्तम् ॥ तत्प्रणामः स्तवराजपूरकोभविष्यतीति रामं नमस्कृत्येत्यस्यभावः । कथंभूतंरामं कृष्णमिन्द्रनीलमणिप्रभम् । पुंसांचित्तापकर्षकं वा रूपौदार्य्यगुणैः पुंसांदृष्टिचित्तापहारकमितिमहर्षिवचनात् । पुनः कीदृशम् । जगन्मयम् ॥

अत्र न प्राचुर्य्यार्थेमयट्॥ अन्नमयोयज्ञइतिवत॥ चिदेकरूपस्य रामस्यानेकरूपजगद्रूपत्वापत्तेः। नापिविकारे मयट्। मृण्मयघटस्येव रामस्य जगद्विकारत्वापत्तेः। नच पूरणार्थेमयट्। अमृतमस्य चन्द्रस्येवरामस्यजगद्व्याप्यत्वापत्तेः। नापिप्राधान्यार्थेमयट् स्त्रीमयस्यजाल्मस्येव॥ रामस्य जगत्प्रवेशत्वापत्तेः। जगन्मयंजगद्व्यापकम्॥ तैलमयंतिलइतिवत्प्रयोग इति व्याख्यानमपि नोपपद्यते॥ तिलस्यतैलव्याप्यवत्। रामस्यजगद्व्याप्यत्वापत्तेः॥ तदेवंजगन्मयपदस्य तात्पर्य्यानुपपत्तेः॥ तात्पर्य्यानुपपत्तिस्तु लक्षणावीजत्वात्। जगत्पदस्य जगद्धर्मेलक्षणा। ततस्तुप्राधान्यार्थेप्राचुर्य्यार्थेवामयट्॥ जगद्धर्मप्रधानं जगद्धर्मप्रचुरं वा रामइत्यर्थः। रामस्यसर्वशोमनुष्यवत्॥ सर्वथास्वकुलरीत्याप्रवर्तमानस्य॥ जानकीविरहकाले लक्ष्मणमूर्छाकालेचमनुष्यवदतिशोकमहाकुलस्य॥ स्वस्वाभाविकंज्ञानमाछाद्याज्ञानिमनुष्यवत्॥ आत्मानं मानुषंमन्ये रामंदशरथात्मजम्॥ योऽहंयश्चयतश्चाहं तद्भवान्वक्तुमर्हतीति॥ ब्रह्माणं प्रत्यात्मानं मानुषंज्ञापयित्वा तं प्रतिस्वात्मस्वरूपंपृष्टवतः॥ स्वस्वाभाविकींशक्तिंविधायवानरैः सेतुवन्धनादिकं कारयित्वा राक्षसैः सहतान् युद्धंकारयित्वाचातिपरिश्रमेण रावणं हतवतः। स्वांगुल्यग्रदर्शनमात्रेणरावणंहन्तुंसमर्थस्य॥ पुनः जानकीविरहकाले स्वाविनाभूतानि[1] ज्ञानशक्तिवलैश्वर्य्यतेजोवीर्य्याणिस्वैश्वर्य्यगुणान् अप्रधानीकृत्यमनुष्यधर्मान् शोकमोहरोदनादीन् प्रधानीकृत्य विल्वादीन्वृक्षान्प्रतित्व[2]-

---

टि० (१) स्वाविनाभूतानिस्वंश्रीरामचन्द्रस्वरूपं तेनाविनानाम-श्रीरामचन्द्रस्वरूपेणैवसंति न रामचन्द्रस्वरूपं विनाभवतीत्यर्थः॥ १॥

टि० (२) जनकस्यसुतांभीरुमथपप्रच्छराघवः। कदम्बममजानीषेममसीतांशुभाननाम्॥ स्निग्धपल्लव संछन्नपीतकौशेयवासिनीम्॥ शंसत्वंयदिवाद्रष्टाविल्वविल्वोपमस्तनीम्॥ १॥

याजानकी दृष्टेत्येवंप्रमत्तवत्पृष्टवतः । रामस्योपपद्यते जगद्धर्मप्रधानत्वंजगद्धर्मप्रचुरत्वंवा ॥ १० ॥

**अयोध्यानगरे रम्येरत्नमण्डपमध्यगे ।**
**स्मरेत्कल्पतरोर्मूलेरत्नसिंहासनंशुभम् ॥ ११ ॥**
**तन्मध्येऽष्टदलंपद्मं नानारत्नैश्चवेष्टितम् ॥**
**स्मरेन्मध्येदाशरथिंसहस्रादित्यतेजसम् ॥ १२ ॥**

तदेवं युधिष्ठिरप्रश्नद्वयस्योत्तरमुक्त्वाहरिध्यान पुरस्सरस्तवराज-कथनस्यप्रतिज्ञां कृत्वा ॥ अथकिंध्यानंमुक्तिसाधनमिति तृतीयप्रश्नस्योत्तरत्वेन हरिध्यानंवक्तुम् ॥ यत्परमंतत्वं ज्योतिरूपंरामपदवाच्यत्वेनोक्तं तत्साकारमेवनतु निराकारम् ॥ तदेवश्रीदशरथपुत्रत्वेनायोध्यायामाविर्भूतमिति ज्ञापयितुमादौतस्यधाम तत्रयोगपीठं च दर्शयत्ययोध्येति ॥ अविद्यादिदोषैर्योद्धुमशक्येत्ययोध्यातदाख्येनगरे तन्मध्येइत्यर्थः ॥ स्मरेदिति ॥ आदौरम्यमयोध्यानगरं स्मरेत् ॥ ततस्तन्मध्येरत्नमण्डपंस्मरेत् ॥ ततोरत्नमण्डपमध्यगंकल्पतरुं स्मरेत् ॥ ततः कल्पतरोर्मूले रत्नसिंहासनंस्मरेत् ॥ ध्यायेत् ॥ ११ ॥

तन्मध्येऽष्टदलरत्नमयंपद्मासनंस्मरेत् ॥ तस्यपद्मासनस्यमध्ये दाशरथिमिति ॥ एवंसंचिंतयेद्विष्णुंयज्ज्योतिरमलंशिवम् ॥ इतिध्यान प्रकरणसमाप्तौ वक्ष्यमाणात् ॥ यज्ज्योतिरमलंशिवंपरमंतत्वंसच्चिदानन्दार्थकरामशब्दवाच्यत्वेनोक्तंपूर्वम् ॥ तदेवश्रीदशरथगृहे आविर्भूय दाशरथित्वेनख्यातिं यातं यदिति ॥ तंदाशरथिं दशरथराजकुमारं श्रीरामचन्द्रंस्मरेच्चिंतयेत् ॥ कीदृशम् । सहस्रादित्यतेजसम् ॥ शतं सहस्रमयुतंसर्वेह्यानन्त्यवाचकाः । इत्युक्तेः । भानुकोटिप्रतीकाशंकिरीटेन विराजितमित्य

प्रैव तत्स्वरूपभिन्नस्य ॥ तत्किरीटस्य कोटिसूर्यप्रतीकाशत्वोक्त्या कैमुत्यन्यायेनतद्विग्रहस्य ॥ बिरराममहातेजाः सच्चिदानन्दविग्रह इत्यग्रेसच्चिदानन्दरूपत्वेन वक्ष्यमाणस्यापरिमितादित्यतेजस्त्वोपपत्तेरनन्तादित्यतेजसमित्यर्थः । यद्यपि । गगनंगगनाकारंसागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिवेतिवत् ॥ रामतेजइवरामतेजः एवतत्सदृशदृष्टान्ताऽभावात् ॥ लोकेसूर्य्यतेजस एवसर्वतेजसाधिक्यदर्शनाच्चाऽगत्या[1]सहस्रादित्यतेजसमित्युक्तम् । यदत्रोक्तं पूर्वैः ॥ पराऽनभिभाव्यत्ववतेजस्त्वमितितल्लक्षणात् ॥ पराऽनभिभाव्यत्वां[2] तेजः । तथात्वांसहस्रादित्यतुल्यमितिभावः, नतुसहस्रादित्यवत्तेजोदधानमित्ययमर्थो माधुर्य्यविरोधादिति तत्सत्यंतथापि ॥ ध्यानप्रकरणसमाप्तौ । एवंसंचिंतयेद्विष्णुं यज्ज्योतिरमलंशिवमित्युक्तेः । यज्ज्योतिरमलंशिवंतदेवं सहस्रादित्यतेजसम् ॥ पितुरंकगतंराममिन्द्रनीलमणिप्रभम् । कोमलांगं विशालाक्षं विद्युद्वर्णां बरावृतम् ॥ भानुकोटिप्रतीकाशंकिरीटेन विराजितमित्याद्युक्तप्रकारेणचिंतयेत् । ध्यायेदित्येवं सहस्रादित्यतेजस्त्वादिरूपत्वेन तद्ध्यानस्यवक्ष्यमाणात्॥ तेनेदृशेनपरतत्वस्वप्रकाशज्योतीरूपदाशरथिरामयथाश्रुतेनध्यानेनन विरोधःकश्चित् ॥ ईदृशंतेजआच्छाद्यसर्वजननयनविषयतांगतस्य । श्रीदशरथगृहेमनुष्यरीत्यावर्तमानस्याच्छादितस्वमहतेजस्कस्यदाशरथेर्[3]माधुर्य्यस्योपपत्तेः । यतोमाधुर्य्यंनाम कदाचित्कदाचित्किंचि-

---

टि० (१) नगतिःअगतिःतयाअगत्या ॥ सूर्य्योपमापरित्यज्यान्योपमावक्तुं कस्यापिगतिर्नवर्तते इत्यभिप्रायः ॥ १ ॥

(२) परैःपुरुषैः न अभिभाव्यतेनतिरस्क्रियते इतिपराऽनभिभाव्यःतस्यभावः परानभिभाव्यत्वम् ॥ २ ॥

(३) माधुर्य्यस्यदाशरथेर्ध्यानेन कश्चिद्विरोधोनोपपद्यते इतिपूर्वेणान्वयः ॥ ३ ॥

त्किंचित्पारमैश्वर्य्यव्यक्तेसति सर्वदामनुष्यरीत्यावर्तमानत्वम् ॥ यथासेतुबंधनशक्राद्यजितरावणादि पराभवायोध्यावासिपरं पदनयनादिकेस्वेतरसमस्तदुष्करे कर्मणिमनुष्यरीत्यैववर्तमानत्वंराघवस्यश्रूयते । ऐश्वर्य्यंतुमनुष्यरीतिमनपेक्ष्य पारमैश्वर्य्यव्यक्तिः तच्च[1] वेणीनिगूढसारस्वतप्रवाहवन्माधुर्य्येनिगूढमेव सर्वजनचक्षुर्विषयेराघवेवर्तमानम् ॥ कदाचित्कदाचित्किंचित्किंचिद्व्यक्तीभवति ॥ यथारावणादीनामंगुल्यग्रेण हन्यामितिप्रतिज्ञासाचानन्तवीर्य्यमित्यत्रदर्शयिष्ये ॥ तत्रैश्वर्य्यप्रभावप्रधानमेवभगवच्चिंतनमुक्तिसाधनंभवति ॥ अतऐश्वर्य्यमेवेदंध्यानंव्यासेनोक्तम् ॥ स्पष्टमुक्तंहिगीतायां श्रीकृष्णेनभगवतैश्वर्य्यज्ञानपूर्वकस्य स्वचिन्तनस्य मोक्षसाधनत्वं तदन्यप्रकारचिन्तननिषेधपूर्वकम् ॥ अव्यक्तं व्यक्तिमापन्नं मन्यंतेमामबुद्धयः । परंभावमजानन्तोममभूतमहेश्वरम् ॥ १ ॥ मोघाशामोघकर्माणोमोघज्ञानाविचेतसः । आसुरींराक्षसीं चैवप्रकृतिं मोहिनींश्रिताः२ महात्मानस्तु मांपार्थदैवींप्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वाभूतादिमव्ययम् ॥ ३॥ इति तथा ॥ अहंसर्वस्यप्रभवोमत्तः सर्वंप्रवर्तते । इतिमत्वाभजन्तेमां बुधाभावसमन्विताः ॥ ४ ॥ मच्चित्ता मद्गतप्राणाबोधयन्तः परस्परम् । कथयंतश्चमां नित्यं तुष्यन्ति च रमन्ति च ५ तेषांसततयुक्तानांभजतांप्रीतिपूर्वकम् । ददामि[2] बुद्धियोगंतं येनमामुपयांतिते ६ तेषामेवानुकंपार्थमहमज्ञानजंतमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ७ ॥ इत्यादि ॥ व्यासेनाप्यत्रैवोपक्रमे तत्वज्ञानस्यमुक्तिप्रदत्वमुक्तम् ॥ तदेवपरमं तत्वंकैवल्यपदकारणमिति ॥ नारदोऽपिपरमतत्वबुद्ध्यैवदाशरथिं भजते ॥ न बुद्ध्यन्तरेणेति तद्वचनैरेवग-

---

टि० (१) चपुनस्तदैश्वर्य्यम् ॥ १ ॥

(२) तेषांभक्तानामनुकंपार्थमहं तंबुद्धियोगं ज्ञानंददामियेनज्ञानेन तेबुधाः पुरुषाः मामुपयांति प्राप्नुवंति ॥ २ ॥

म्यते ॥ नारायणं जगन्नाथमित्यादिभिः। परात्परतरंतत्त्वं सत्यानन्दं चिदात्मकम् ॥ मनसाशिरसा नित्यं प्रणमामिरघूत्तमम् ॥ इत्यादिभिश्च॥ तद्विषयिकाकेवलमनुष्यत्वबुद्धिस्तुतत्प्राप्तिबाधिकेत्युक्तंविष्णुपुराणेपराशरेण मैत्रेयंप्रति ॥ दशाननत्वेप्यनङ्गपराधीनतया जानकीसमाशक्तचेतसो दाशरथिरूपधारिणस्तद्रूपदर्शनमेवासीत्॥ नायमच्युतस्त्यासक्तिरित्यतोऽन्तःकरणेमानुषबुद्धिरेवकेवलमस्याऽभूत् पुनरस्य च्युतविनिपातमात्रफलमखिलभूमण्डलश्लाघ्यचेदिराजगृहेजन्म॥ अव्याहतंचैश्वर्यं शिशुपालत्वेचावापेति ॥ भागवतेपिवसुदेवंप्रतिनारदेन मनुष्यत्वबुद्धिर्नहि कार्य्यापरमेश्वरेइत्युक्तम्॥मापत्यबुद्धिमकृथाः कृष्णेसर्वात्मनीश्वरे ॥ इति ॥ १२ ॥

## पितुरंकगतं राममिन्द्रनीलमणिप्रभम् ।
## कोमलांगंविशालाक्षंविद्युद्वर्णांवरावृतम् ॥१३॥

एवं तस्यैश्वर्य्यतत्वंनिर्दिश्याप्यैश्वर्य्यगौणंमाधुर्य्यप्रधानं बाल्यावस्थं श्रीरामंध्यायति पितुरित्यादिचतुर्भिः पितुर्दशरथस्यांकेस्थितंरामं रमणीयविग्रहम् ॥ रामनामभुविख्यातमभिरामेण वा पुनः। इतिरामतापिनीयश्रुतेः। इन्द्रनीलमणिप्रभमिति। अनेनदृष्टान्तेन श्रीरामविग्रहस्य चिक्कणत्वंस्निग्धत्वममेद्यत्वं कांतिमत्वंव्यक्तम् ॥ तत्र चिक्कणत्वेनतद्रूपज्ञेयम् ॥ तन्नाम ॥ यद्योगाद्भूषणान्यपिभूषितानिभवन्ति। यद्विनामणिभूषणान्यपि सर्वाङ्गेष्विवनभांति ॥ यच्चक्षुरानन्दजनकं तृप्तिं च न जनयति तद्रूपंकथ्यते॥ उक्तंच॥ अंगान्यभूषितान्येववलयाद्यैर्विभूषणैः। येनभूषितवद्भांति तद्रूपमितिकथ्यते १ इदं यौवनमि-

(१) इत्यादिभिश्च पुनरित्यादिभिस्तद्वचनैस्तस्य नारदस्यवचनैरवगम्यते ॥ ३ ॥

घशरीरधर्मविशेषः॥ सर्वशरीरसाधारणंतुन॥ चक्षुर्मात्रग्राह्यत्वेपिरंग[1]
वाची रूपशब्दोऽत्रन ॥ अभेद्यत्वेन संहननमुच्यते ॥ तन्नामवज्रवद्भे-
द्यावणोज्ज्वलावयवसन्निवेशः । समः समविभक्तांग इत्युक्तोऽन्यूनाधि-
कांगरचनाविशेषः । इदंतुसौन्दर्य्यविशेषः । अतएवसर्वशरीरसाधार-
णो न भवति॥ इदमप्युक्तम्॥ अङ्गप्रत्यङ्गकानांयः सन्निवेशोयथोचितः
सुश्लिष्टसन्धिबन्धःस्यात्तत्सौन्दर्य्यमिहोच्यते ॥ बाल्येऽगानि-
विभक्तानि नभवन्ति वार्द्धके शिथिलबन्धनानि
चेतितदुभयाभावोक्त्यायौवनारम्भोपिफलितः ॥
यौवनस्यसाधारण्येपि तन्नित्यताया असाधारण्यादकालकृतत्वाच्च
असाधारणमिदंयौवनं श्रीरामस्य अन्यथाह्यनित्यमेवफलंस्यात्॥ मा-
धयतांतत् समुद्रशास्त्रोक्तलक्षणयुतमित्यर्थः॥ प्रभाकांतिः । साचस-
र्वाङ्गसाधारणसमुदायशोभेत्युच्यते ॥ इदमेवकुत्रचिल्लावण्यत्वेन
कथ्यते ॥ तदुक्तम्॥ मुक्ताफलेषुछायायास्तरलत्वमिवांतरा । प्रति-
भातियदङ्गेषुलावण्यं तदिहोच्यते १ वर्णमाधुर्य्यमन्वभवत्॥ इदम-
तृप्तिहेतुत्वेनरोचको गुणविशेषः । सर्वसाधारणोनभवति ॥ कोम-
लांगमिति॥ सुकुमारांगसौकुमार्य्यं नामपुष्पहास्यतुल्यकोमलताख्यों-
ऽगविशेषः॥ प्रायस्त्वचाग्राह्यो[2] वाहिकाविहारांदोलगुरुभूषणजनित-
प्रस्वेदादिनाचक्षुर्ग्राह्योपि मार्दवाख्योगुणोमनस्यपिवाच्यपिवर्तते ॥
वाचिकःश्रोत्रग्राह्योमानसश्चचेष्टाभिरनुमेयः । अत्रकलधौतमणिर-
त्नेषु नीलपीतादिपुष्पादिसन्निधिमात्रेण तत्तद्रङ्गभानेसत्यपि वस्तुत-
स्तेषांस्वाभाविकस्वर ङ्गव्यतिरिक्तकल्पितरङ्गरहितत्ववद्विषयभेदेन॥
कालाग्निसदृशः क्रोधेक्षमयापृथिवीसमः । इत्युक्तोगुणविरोधोऽपि
नास्तीतिबोध्यम्॥ विशालाक्षमिति॥ विशालेकमलदलवत्किञ्चिदरु-

टि० (१) अत्र रंगवाची नीलपीतादिवर्णवाची रूपशब्दो न भवति१।
टि० (२) प्रायोवाहुल्येनत्वचात्वगिन्द्रियेण ग्राह्योभवतीत्यर्थः॥ १ ॥

णतागर्भिते ऽक्षिणीयस्यसतथोक्तम् ॥ विद्युद्वर्णांबरावृतमिति विद्युद्व- द्वद्वेपीतांबरे ताभ्यांपरिधानोत्तरीयाभ्यामावृतम् ॥ १३ ॥

भानुकोटिप्रतीकाशं किरीटेनविराजितम् ।
रत्नग्रैवेयकेयूररत्नकुण्डलमण्डितम् ॥१४॥
रत्नकंकणमंजीरकटिसूत्रैरलंकृतम् ।
श्रीवत्सकौस्तुभोरस्कंमुक्ताहारोपशोभितम् १५

भानु कोटीति ॥ भानुकोटिवत्प्रकाशमानेन किरीटेनस्वैश्वर्य्या- त्वप्रकाशेनविराजितम् ॥ तादृशेनकिरीटेनविशेषतः । प्रकाशितस्वपर मेश्वरत्वमित्यर्थः ॥ स्वरूपानुरूपकिरीटधारिणमित्यभिप्रायः ॥ उप- लक्षण चतत ग्रैवेयादिभूषणानाम् । भानुकोटिप्रतीकाशत्वस्यान्यथा- तस्यकिरीटनिकृष्टभूषणधारित्वानुपपत्तेः । स्वस्वरूपानुरूपैरतिप्रका- शमानै रत्नग्रैवेयादिभिरलंकृतमित्यर्थः । तत्रग्रैवेयाणिग्रीवाभूषणानि ॥ १४ ॥ रत्नकंकणेति ॥ रत्नकंकणेमंजीरेनूपुरे कटिसूत्रं कनकसूत्र ग्रथितं युग्मभूतं कटिबन्धनडोरकस्तै रलंकृतंशोभितमित्यर्थः ॥ महा- पुरुषत्वद्योतको वक्षोवर्तिपीतरोमात्मकचिन्हविशेषः श्रीवत्सशब्दे नोच्यते ॥ अत्र श्रीवत्सस्यतत्रापि कौस्तुभस्यनित्यविभूषणस्य धा- रणत्वोक्तेः ॥ इतिरामस्यरामाख्या भुविस्यादथतत्वतः । १ । रमन्ते योगिनोऽनन्तेसत्यानन्दे चिदात्मनि । इति रामपदेनासौपरंब्रह्माभिधी- यते । २ । इत्याभ्यां श्रुतिभ्यां रामस्यानादिरामनामकस्य परस्यब्रह्मणो भुविश्रीदशरथगृहे ॥ रघुकुलेऽखिलंरातिराजते योमहीस्थितः । स राम इति लोकेषुविद्वद्भिः प्रकटीकृतः ।१। राक्षसायेनमरणं यांति- स्वोद्रेकतोऽथवा । रामनाम भुविख्यातमभिरामेणवापुनः ।२। इत्यादि श्रुतिनिचक । तत्कर्मगुणहेतुकारामाख्यारामेति संज्ञास्यादित्युक्तेः ॥

यस्मिन्ननन्तेसत्यानन्दे चिदात्मनि योगिनोरमन्ते स सत्यानन्दगुण-कश्चिदात्मारामः ॥ इतिरामपदेन ॥ इति निरुक्त्या सिद्धेन रामपदे नासौदाशरथिः परंब्रह्माभिधीयते कथ्यते ॥ इत्युक्तेश्चाजहत्स्वनामाकृतिचिन्हादेरेव रामाख्यस्यपरस्य ब्रह्मणो अत्राविर्भावत्वावगमाच्च ॥ श्रीवत्सकौस्तुभोरस्कमिति । दाशरथेः स्वनित्य चिन्हभूषण विशिष्टत्वस्मरणस्य ॥ तत्किरीटकुण्डलादीनामपि तन्नित्यभूषणत्वस्योपलक्षणत्वाच्च ॥ तद्ग्रैवेयादिभूषणानामपि भानुकोटिप्रतीकाशत्वम् ॥ तदधिकापरिमितप्रकाशत्वं चोपपद्यते ॥ मुक्ताहारोपशोभितमिति यद्यपि हारोमुक्तावलावितिविश्वकोशात्[१] । केवलहारशब्दो मुक्तासन्दर्भस्यवाचकः । तथापि मुक्ताहारेत्यत्र मुक्ताशब्दोरत्नांतरासंपर्कत्वद्योतनार्थः स्फुटमन्यत् ॥ १५ ॥

**दिव्यरत्नसमायुक्तं मुद्रिकाभिरलंकृतम् ।**
**राघवं द्विभुजंबालं राममीषत्स्मिताननम् ॥ १६ ॥**

दिव्यरत्नसमायुक्तमिति दिव्यरत्नैर्बहुविधरत्नजटितैः पदिकैः समायुक्तम् ॥ स्फुटमन्यत् ॥ राघवंद्विभुजमिति राघवस्याजहत्स्वरूपत्वं ज्ञापयति । स्थूलमष्टभुजंप्रोक्तं सूक्ष्मंचैवचतुर्भुजम् । परन्तु द्विभुजंप्रोक्तं तस्मादेतत्त्रयंयजेत । १ । इति पंचरात्रेपररूपस्य द्विभुजत्वोक्तेः । पुनस्तत्रैवपंचरात्रे ॥ द्विहस्तमेक वक्त्रं च शुद्धस्फटिकसंनिभम् । सहस्रकोटिवह्नीन्दुलक्ष्यकोट्यर्कसंनिभम् । १ । मरीचिमण्डले संस्थं बाणाद्यायुधलांक्षितम् । किरीटहारकेयूरवनमालाविराजितम् । २ । पीताम्बरधरं सौम्यं रूपमाद्यमिदंहरेः । इति द्विभुजैकवक्त्रस्यैवादि-

---

टि० (१) हारोमुक्तावली वेद छन्दोऽसौशतयष्टिकः । हारभेदाद्यष्टिभेदाद्गुत्सगुत्सार्द्धगोस्तनाः ॥ १ ॥ इत्यमरः

रूपत्वोक्तेश्च ॥ शिवसंहितायामपितथैवोक्तं भवति ॥ रत्नकंकणकेयूर शोभिताग्रभुजद्वयमिति ॥ महाशम्भुनापितथैवोक्तम् ॥ अखण्डब्रह्मणो नित्याद्राघवान्नित्यविग्रहात् ॥ चिदानन्दात्परानन्दात्साकेतनगरा-धिपात् ।१। भुक्तिमुक्तिप्रदानार्थं साधकानां पुनः पुनः । आनन्द-वाचकः शब्दो विभूतिसंप्रयोजितः । अन्तेविष्णुं विजानीयात्प्रकृतेर्व शमागतम् ॥ इति तथा श्रीरामतापनीये ॥ रमन्तेयोगिनोऽनन्ते सत्या-नन्दे चिदात्मनि ॥ महाशंभुरुवाच ॥ शृणुतात प्रवक्ष्यामि रामस्या-द्भुतकर्मणः । परदेव्याश्च सीतायाः लीलामात्रमिदं जगत् ॥ ७ ॥ इन्द्रनीलमणिस्निग्धोरुचिराकृतिरव्ययः।द्विभुजावयवोदक्षःशरकोदण्ड-मंडितःइतिरामस्तुविग्रहवान्परंब्रह्माभिधीयतेत्वांदेवःपरमंज्योतिर्माते-यं परमागतिः ॥१॥ मिथुनंतुपुराजातं सीतापांगविमोक्षणात् । एकं वस्तु यथाधारे नानात्वेनोपलक्ष्यतो२। तथैकंपरमं ब्रह्मनित्यलीलासुविग्रहम् अद्वैतंसर्वतंत्रेषु स्त्रीपुरुषव्यवस्थितिः ॥ ३ ॥ महाविष्णुरुवाच ॥ कथ-मेतद्विजानामिमिथुनं ब्रह्मसंभवम् । सीताकापिपरानित्यारामः को-वासदात्मकः॥४॥ युवाभ्यांपरतोनित्यौ कौतौदेवौसुरेश्वरौ ॥ ५ ॥ संशयोमेमहांस्तातहृदयेपरिवर्तते । अनुग्राह्यस्त्वया शम्भोपुत्रोऽहंज-नितस्तव ॥ ६ ॥ इति रामपदेनासौपरं ब्रह्माभिधीयते ॥ १ ॥ इति श्रुत्यारामःपरंब्रह्माभिधीयते । इतिज्ञेयम् । एवंज्ञेयापरानित्यासीता ब्रह्मसुविग्रहा । सर्वशक्तिमयीधात्रीसर्वशक्तिपरातथा ॥ १ ॥ अनुग्रहा-र्थमस्माकमेकंब्रह्मद्विधागतम् । आनन्दावयवाभिन्ना नित्यलीलासुवि-ग्रहा ।२। [1] रामःसीताजानकीरामचन्द्रो नाहुर्भेदंह्येतयोर्नास्तिकश्चित् । संतोमत्वातत्वमेतद्विबुद्धयापारंयाताः संसृतेर्मृत्युकालात् ॥ ३ ॥

---

टि० (१) रामःसीतासीतास्वरूप एवतथाजानकीरामचन्द्रो रामच-न्द्रस्वरूपाएव न तु तौपृथगस्तः ॥ अतोमुनयएतयोः सी-तारामयोर्भेदंनाहुर्यतोविचारात्कश्चिद्भेदोनास्ति ॥ १ ॥

इत्यादिकम् ॥ अत्र ॥ इतिरामस्तुविग्रहवान्परब्रह्माभिधीयते ॥ इति सीतासुविग्रहेतिचाभ्यां सीतारामयोर्द्वयोरपि ब्रह्मत्वेउक्तेपिपुनरेकं ब्रह्मद्विधागतमितिवचनेरामः सीताजानकीरामचन्द्र इत्यनेन च ये-केचिच्छ्रीजानक्याजीवत्वंमन्यंते तन्मतंनिरस्तम् ॥ ब्राह्मणोस्यमुख-मासीद्बाहूराजन्यकृतः। इत्येषाश्रुतिरपि कारणविग्रहस्यद्विभुजत्वं वदति ॥ इतिरामस्यरामाख्या भुविस्यादथतत्वतः ॥ रमन्तेयोगि-नोऽनन्तेसत्यानन्देचिदात्मनि। इतिरामपदेनासौपरं ब्रह्माभिधीयते॥ इतिश्रीरामतापनीयश्रुत्यापरस्य ब्रह्मणोरामपदवाच्यत्वमभिधायत-स्यैव रामाख्यस्यपरस्य ब्रह्मणोऽत्ररामोऽनन्तरूपीतेजसावह्निनासमः। सत्वनुष्णगुविश्वश्चेदग्नीषोमात्मकंजगत्॥ उत्पन्नंसीतयाभातिचन्द्र-श्चंन्द्रिकयायथा ॥ १ ॥ इति जगत्कारणत्वमभिधाय ॥ द्विभुजःकुण्ड-लीरत्नमालीधीरोधनुर्द्धरः। इति तस्यैवद्विभुजत्वमुक्तम् ॥ अतःपरस्व-रूपविग्रहोद्विभुजएव ॥ किंच ॥ सर्वाभिपत्यंसमरंगधीरंसत्यं चिदा-नन्दमयस्वरूपम् ॥ इति ॥ विरराममहातेजाः सच्चिदानन्दविग्रहः। अ-र्द्धमात्रात्मकोरामोब्रह्मानन्दैकविग्रहः॥ इत्येवमादिश्रुतिस्मृतिभिः श्री-रामस्यस्वरूपतोविग्रहतश्च सच्चिदानन्दरूपत्वोक्तेः। विग्रहावयवयो-र्भुजयोरपि सच्चिदानन्दरूपत्वेनैकरसस्थिततयाऽविकारित्वादविना-शित्वाच्चादावंतेमध्ये च न द्विभुजयोस्त्यागो न चतुर्भुजादीनांग्रहण-मुपपद्यतेपरस्य ब्रह्मणस्तस्मात्तस्यानाद्यनंतरूपं द्विभुजमेवेतिस्फुट-मुक्तं भवतिपंचरात्रे ॥ परंतुद्विभुजंप्रोक्तमिति ॥ द्विहस्तमेकवक्त्रंचरू-पमाद्यमिदंहरेः। इतिचेतिसंक्षेपः ॥ १६ ॥

तुलसीकुन्दमन्दारपुष्पमाल्यैरलंकृतम् ।
कर्पूरागरुकस्तूरीदिव्यगन्धानुलेपनम् ॥ १७॥

तुलसीति ॥ तुलसीकुन्दमन्दारादिपुष्पमाल्यैरलंकृतम् ॥ कर्पूरागरुकस्तूरीदिव्यगन्धानुलिप्तांगमित्यर्थः ॥ अत्र विधुद्रणां

घरावृतमित्यारभ्य दिव्यगन्धानुलेपनमित्यंतेन पीतांवरधारिणः॥ किरीटादिभूषणैस्तुलसीकुन्दमन्दारमाल्यैश्चालंकृतस्य कर्पूरादि दिव्यगंधानुलिप्तांगस्य रामस्यसुवेषता दर्शिता ॥ सुवेषता नाम॥ मणिभूषणवसनसुगंधकुसुमादिधारणोर्थः॥ स्वतः सुन्दरेष्वप्यंगेषु शोभाविशेषः। धृतेष्वपितेषु केनचिद्वैगुण्येन शोभा न जातेतिपश्यतां प्रतीतेः। यथोचितसर्वश्रृंगारोत्तमश्रृंगारसम्पत्तिः सुवेषतेत्यर्थः। तदिदंरामस्य रूपादिपंचकं स्फुटमुक्तं महर्षिणा॥ रूपंसंहननं लक्ष्मीं सौकुमार्य्यंसुवेषताम्। दद्दशुर्विस्मृताकारा रामस्य वनवासिनः।१। इत्यत्रलक्ष्मीशब्दप्रभाशब्दःपर्य्यायः चन्द्रेलक्ष्मीःप्रभासूर्य्येइतिप्रभापद-स्थानेलक्ष्मीपदप्रयोगात्॥अत्रदद्दशुर्विस्मिताकाराविस्मृतिदेहाइत्यनेन रामरूपादीनां पुंसामपिमोहकत्वमुक्तम्। तदप्ययुक्तंतेनैव। चन्द्र-कान्ताननंराममतीव प्रियदर्शनम्। रूपौदार्य्यगुणैः पुंसांदृष्टिचित्ताप-हारकम्।१। इत्यत्रपुंसांदृष्टिचित्तापहारकमित्यनेन पुंसांतद्रूपादा-वत्यासक्तत्वेन तद्वियोगासहमानत्वेन स्त्रीवत्तद्रूपादिभोक्तृत्वं ज्ञापि-तम्॥ तदेवपद्मपुराणेस्फुटमुक्तं भवति॥ पुरामहर्षयः सर्वे दण्ड-कारण्यवासिनः। दृष्ट्वारामंहरिं तत्रभोक्तुमैच्छन्सुविग्रहम्।१ इति पुंसामपि मनोहरतीति हरिस्तमितीदृशोऽत्रहरिशब्दस्यार्थोज्ञेयः। पुंसांदृष्टिचित्तापहारकमित्यस्यानुरोधात्॥ भोक्तुमैच्छन्नितिस्त्रीवत्। रामेणसहभोगेच्छामकुर्वनित्यर्थः, अनेनपुंसामपि स्त्रीभावेनश्रीराम-स्यभजनमुपपद्यते॥श्रीरामरूपादीनामेवपुंसां तत्पुरुषत्वविस्मरणपू-र्वकस्त्रीभावेन श्रीरामसेवनस्यसंपादकत्वात्॥ तत्कुतोऽवगम्यते इति चेत्॥ कैमुत्यन्यायतइतिब्रूमस्तद्यथा॥ यदिमहर्षयोपितद्रूपादिभिर-पहृतदृष्टिचित्तास्तद्रूपादिपरवशाःसंतस्तेनसहभोक्तुमैच्छन्॥ तदात-दन्येतद्रूपादिभिरपहृतचित्तास्संतस्तेन सहभोक्तुमिच्छंत्वितिकिंव-क्तव्यम्॥ इत्येतदर्थकाभ्यां दृष्टिचित्तापहारकमिति भोक्तुमैच्छन्निति-चाभ्यांपदाभ्यां श्रीरामरूपादय एवपुंसांदृष्टिचित्तंचापहृत्यतान् श्री-रामविषयिकभोगेच्छायां प्रवर्तयंतीतिभावः। तदेवंवाल्मीकिपद्मपुरा-

पावचनप्रमाणात् ॥ पुंसामपिस्त्रीभावेन श्रीरामभजनमुपपद्यते ॥ किमुतस्त्रीणाम्॥ नरामरूपादीनांकेवलं स्त्रीपुरुषाणामेवदृष्टिचित्तापहारकत्वमुपपद्यते ॥ किन्तुस्थावरजंगमात्मकस्यसर्वजगतोऽपि ॥ यतोश्रीअयोध्यानिर्गतस्यरामस्य वियोगमसहमानास्तेसर्वेऽपिस्थावरजंगमाः स्वस्वक्रियां विस्मृत्यातिविषादंजड़त्वं च प्रापुरिति सुमन्तवचनैरवगम्यते ॥ विषयेतेमहाराजमहाव्यसनकर्षिताः । अपिवृक्षाः परिम्लानाः सपुष्पांकुरकोरकाः ॥ १ ॥ उपतप्तोदकानद्यः पल्वलानिसरांसिच । परिशुष्कपलाशानि वनान्युपवनानिच ॥ २ ॥ न च सर्पंतिसत्वानि व्याला नप्रसरंति च । रामशोकाभिभूतं सन्निष्कूजमिवतद्वनम् ॥ ३ ॥ लीनपुष्करपत्राश्च नद्यश्च कलुषोदकाः । संतप्तपद्माः पद्मिन्योलीनमीनविहंगमाः ॥ ४ ॥ जलजानि च पुष्पाणिमाल्यानि स्थलजान्यपि । न च भांत्यल्पगन्धीनिफलानि च यथापुरा ॥ ५ ॥अत्रोद्यानानि शुष्कानिप्रलीनविहगानि च । न चाभिरामानारामान्[1]पश्यामिमनुजर्षभ ॥ ६ ॥ प्रविशंतमयोध्यायां न कश्चिदभिनंदति । नरारामपश्यन्तोनिः श्वसंति मुहुर्मुहुः ॥ ७ ॥ देवराजरथंदृष्ट्वा विनारामिहागतम् । दूरादश्रुमुखाः सर्वेराजमार्गगताजनाः ॥ ८ ॥ हर्म्यैर्विमानैःप्रासादैरवेक्ष्यरथमागतम्। हाहाकारकृतानार्यो रामादर्शनकर्षिताः॥९॥आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः।अन्योन्यमभिवीक्ष्यंतेव्यक्तमार्ततराःस्त्रियः ॥ १०॥ इति हर्म्यविमानप्रासादस्थानां वशिष्ठादिगुरुस्त्रीणां पतिव्रतानामपि श्रीरामविषयिकात्यंतासक्तेरवगमात्तदन्यासांब्राह्मण्यादीनां कैमुत्यन्यायेनतत्रात्यंतासक्तिरुपपद्यते॥ क्वेमाः स्त्रियोवनचरीव्यभिचारदुष्टाः कृष्णेक्वचैषपरमात्मनिरूढभाव इत्युद्धवोक्तानांव्यभिचारिणीनां गोपिकानांतत्र कावार्ता न मित्राणाममित्राणामुदासीनजनस्य च ॥ अहमार्ततयाकंचिद्विशेषमुपलक्षये ॥ ११ ॥

टि० (१) हे मनुजर्षभ आरामान् पुष्पवाटिकान् अभिरामान् पुष्पितवतः अहं न पश्यामि ।

अप्रहृष्टामनुष्याश्च दीनानागतुरंगमाः । आर्तस्वरपरिम्लानाविनिःश्वसितनिःस्वनाः ।१२। निरानन्दामहाराजरामप्रव्राजनातुराः । कौशल्यापुत्रहीनेवह्ययोध्या प्रतिभातिमे ॥ १३ ॥ इत्येवमादिभिस्तदेवमशेषस्थावरजंगममोहकत्वाज्जगन्मोहन मच्युतमितिनारदेनापि तथैवोक्तस्य श्रीरामस्य तद्रूपादिदर्शनमोहितसकलविषयविमुखदिव्यज्ञानोपपन्नमहर्षिगणानामतएव रामेणसहमिथुनीभावोद्यतानां दृष्टान्तेन पुरुषाणामपिस्त्रीभावेन श्रीरामसेवनमुपपद्यते ॥ कृष्णादिभक्तानांपुंसां तु न भर्तृभार्याभावेन तद्भजनमुपपद्यते ॥ तेषांकुत्रापि पुरुषमोहकत्वाश्रवणात् ॥ विशेषतस्तैःसहकस्यविषयिणोपिपुंसो मिथुनीभावायोद्युक्त वाश्रवणाच्च ॥ भागवतपुराणेव्यासेनप्रतिषेधाच्च ॥ तथाहि ॥ गोप्यः कामाद्भयात्कंसोद्वेषाच्चैद्यादयोनृपाः । संबंधाद्वृष्णयो यूयंस्नेहाद्भक्त्यावयंप्रभो ॥१॥ कतमोपि न वेणःस्यात्पंचानांपुरुषंप्रति ॥ तस्मात्केनाप्युपायेनमनः कृष्णेनिवेशयेत् ॥ २॥ इत्यत्र कामभयद्वेषसंबंधस्नेहभक्तीनां षण्णांभगवतिमनोनिवेशोपायत्वां प्रदर्श्यानन्तरंवेणः पञ्चानांमध्येकतमोपिनस्यादित्युक्त्यावेणस्य पंचविधोपायरहितत्वकथनेनपुन्सां षण्णांमुक्तोपायानां मध्येपंचविधोपायाधिकारत्वज्ञापनद्वारागोपीवद्भर्तृभार्याभावेन भगवद्भजनाधिकारत्वनिषेधात् ॥ अन्यथाकतमोऽपिनवेणःस्यात् षण्णांहिपुरुषंप्रतीत्येवंवक्तव्यत्वात् ॥ भागवतटीकाकारेण श्रीधरेणेत्थमेवव्याख्याकरणाच्च ॥ तद्यथातर्हिवेणः किमितिनरकेपातितः । तीव्रध्यानाभावात् पापमेवतत्रफलितमित्याह कतमोपीतिपुरुषेपुरुषस्यकामासंभवात् भयादिभिश्चिंतयतां पंचानांमध्येनैकतमोपीत्युक्तम् । तस्मात्पुरुषाणांभर्तृभार्याभावेनश्रीकृष्णादिभजनंनोपपद्यते ॥ श्रीरामभक्तानांतुपुंसामपितदुपपद्यते ॥ पुंसांदृष्टिचित्तापहारकमित्येवमादीनां सुमन्तोक्तानां च वाल्मीकिवचनानां प्रमाणत्वात् ॥ दृष्ट्वारामंहरिं तत्रभोक्तुमैच्छन्सुविग्रहम् । इत्येवमादिव्यासवचनप्रमाणाच्च ॥ नानामुनिगणाः सर्वेदंडकारण्यवासिनः। ज्ञानयोगतपोनिष्ठा जापका-

ध्यानतत्पराः ॥ १ ॥ मुनिवेषधरं रामंनीलजीमूतसंनिभम् । रमन्ते योषितीभूता रूपं दृष्ट्वामहर्षयः ॥ २ ॥ इत्येवमादीनाम् । दृष्ट्वारामं हरिंतत्रभोक्तुमैच्छन्सुविग्रहमिति व्यासवचनसमानार्थकानां महारामायणोक्तशिववचनानां । प्रमाणत्वाच्चेत्यलमतिविस्तरेण ॥ १७ ॥

योगशास्त्रेष्वभिरतं योगेशंयोगदायकम् ।
सदाभरतसौमित्रिशत्रुघ्नैरूपशोभितम् ॥१८॥

योगशास्त्रेष्वभिरतमिति॥तुलस्यादिभिरलंकृतत्वस्य परकर्तृकत्वोपपत्तेः। योगशास्त्रेष्वभिरतत्वयोगदायकत्वयोः स्वैककर्तृकत्वोपपत्तेस्तत्पौगण्डावस्थाव्यंजकैर्योगशास्त्रेष्वभिरतमित्यादिभिः । पौगण्डावस्थस्यध्यानमाह ॥ योगशास्त्रेष्वित्यादिभिस्त्रिभिः । युज्यतेऽनेनेतियोगोमैत्रीरसस्तत्प्रतिपादकेषु शास्त्रेष्वभिरतं तत्प्रकारप्रवीणमित्यर्थः। यद्वशान्मैत्रीमतां सुग्रीवादीनामसावधीनः यतोऽन्यायाऽऽगतं वालिवधंचकार ॥ योगेशंमैत्रीरसस्वामिनम् ॥ सर्वज्ञत्वादिवदसावपितस्यधर्मः । तथाचाहश्वेताश्वतरश्रुतिः ॥ सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् । सर्वस्य प्रभुरीशानंसर्वस्यशरणंसुहृत् ॥ १ ॥ इति योगदायकम् ॥ ईषत्सान्मुख्येसति॥ अनालोचितविशेषपूर्वकंगुहादीनामपिमैत्रीरसप्रदम् ॥ तदुक्तं श्रीमुखेनैव ॥ मित्रभावेनसंप्राप्तं न त्यजेयं कथंचन । दोषोयद्यपितस्यस्यात्सतामेतदगर्हितम् ॥१॥ इति ॥ अथमैत्रीरसविज्ञत्वंसमुदाहरणत्वेनविशिनष्टि ॥ सदेति ॥ भरतादिभिः सहोपाधिक्येन शोभितं मैत्रीरसपारवश्येन भरतादीन् क्षणमपि न जहातीत्यर्थः ॥ अतएव स्वसार्द्धगमनोत्सुकानां कोशलदेशीयानां स्थावराणां जंगमानां च सर्वेषांभावविलोक्यकरुणा

टि० (१) कौमारंपंचमाब्दांतंपौगण्डोदशमावधिः । कैशोरमापंचदशायौवनंतुततः परम् ॥ १ ॥

दयापरवशत्वेनतद्वियोगमसहमानस्तद्दोषादर्शनपूर्वकं तान्स्वसार्द्धंनीत्वातैः सहस्वधामगतवान् । इत्येतत्सर्वंवाल्मीकीयेप्रसिद्धम् ॥ भागवतेऽपितथैवोक्तम् ॥ यैः संस्पृष्टोऽभिदृष्टो वा संविष्टोनुगतोपिवा । कोशलास्तेययुस्तत्र यत्रगच्छंतियोगिनः ॥ इति ॥ १८ ॥

## विद्याधरसुराधीशैः सिद्धगन्धर्वकिन्नरैः ।
## योगीन्द्रैर्नारदाद्यैश्च स्तूयमानमहर्निशम् ॥ १९ ॥

विद्याधर इत्यादिद्वौस्फुटार्थौ ॥ विद्याधरादयस्तद्गांधर्वक्रीडाकौशल्यमोहितान्तत्संनिधिमनवरतमनुवर्तंते तदुक्तम् ॥ गान्धर्वेषुभुविश्रेष्ठोवभूवभरताग्रजः । इति भुवीति ॥ रामनामभुविख्यातामित्यत्रभुविपदवत् ॥ लोकत्रयोपलणक्षम् ॥ योगीन्द्राश्चसमाधिगम्यं रामतत्वंश्रीरामात्मना चक्षुर्ग्राह्यंविदित्वा कृतकृत्याः संतस्तमेवाहर्निशं स्तुवन्ति ॥ १६ ॥

## विश्वामित्रवशिष्ठादिमुनिभिः परिसेवितम् ।
## सनकादिमुनिश्रेष्ठैर्योगिवृन्दैश्चसेवितम् ॥ २० ॥
## रामं रघुवरं वीरंधनुर्वेदविशारदम् ।
## मंगलायतनंदेवंरामं राजीवलोचनम् ॥ २१ ॥

विश्वामित्रेति ॥ विश्वामित्रवशिष्ठादिमुनिभिः सनकादयोमुनयः श्रेष्ठायेषुते तथोक्तास्तैश्चयोगिवृन्दैश्चपरिसेवितम् मनननिदिध्यासनाभ्यां साक्षात्करणीयंपरंतत्वंश्रीरामात्मना चक्षुर्ग्राह्यंसुखसेव्यंचालोक्यतमेवपरितः सेवन्ते ॥ २० ॥

अथ कैशोरावस्थस्यध्यानमाह ॥ राममितिद्वाभ्यां ॥ अत्रत्यानिरामंरघुवरंवीरमित्यादीनि विशेषणानिकैशोरंव्यंजयन्ति तत्रैव·

तेषांतात्पर्य्यात् ॥ तेनपरिकरालंकारसिद्धिस्तदाहभरतः ॥ विशेषणै र्यत्साकूतैरुक्तिः परिकरस्तुसः ॥ इति ॥ साभिप्रायानेकविशेषणद्वाराविशेषपुष्टः परिकर इति । तदर्थः ॥ मंगलायतनमिति ॥ कैशोरेसर्वभक्तसुखोद्वहनात् ॥ स्वयंमंगलमूर्तिस्वरूपः सत्रभक्तमङ्गलप्रदमित्यर्थो देवंस्वावस्थोचितक्रीडापरम् ॥ पक्षान्तरे ॥ देदीप्यमानम् । रामंरमणीयमूर्तिम् । योगिनोविश्रामस्थानम् । राजीवलोचनमिति । पक्षद्वयेऽपिसमानार्थकम् ॥ अत्ररामादीनिपदानिस्वरूपतोऽर्थतश्च ॥ रूपौदार्य्यगुणैः पुंसांदृष्टिचित्तापहारकमित्यर्थः । पक्षान्तरे ॥ गुणतः स्वरूपतश्चतुल्यरूपाण्युपात्तानि ॥ न तत्रपौनरुक्तिदोषः ॥ वस्तुतस्तु तत्ररागाधिक्यात्॥ इदमेवरागलक्षणम्॥ यत्तद्विषयंपुनः पुनः कीर्तयन्नलंप्रत्ययंनाभ्युपैति ॥ २१ ॥

**सर्वशास्त्रार्थतत्वज्ञमानन्दकरसुन्दरम् ।**
**कौशल्यानन्दनंरामं धनुर्बाणधरं हरिम् ॥२२॥**
**एवं संचिंतयेद्विष्णुं यज्ज्योतिरमलंशिवम् ।**
**प्रहृष्टमानसोभूत्वा मुनिवर्य्यस्सनारदः ॥२३॥**

सर्वशास्त्रार्थेपि । सर्वेषांव्याकरणाभिधानसाहित्यन्यायमीमांसादीनांशास्त्राणामर्थं तत्वंजानातीतिसतथोक्तसूतम् ॥ आनन्दकरश्चासौ सुन्दरश्चसतथोक्तस्तम् ॥ सौन्दर्य्येणानन्दप्रदमित्यर्थः । कौशल्यामानन्दयतीति कौशल्यानंदनम् । न कौशल्यामात्रानन्दप्रदम् ॥ किन्तुचेतनाचेतनात्मकस्य सर्वस्य जगतोऽपीत्यभिप्रायेणाह ॥ राम-

टि० (१) साकूतैः साभिप्रायकैः ॥
(२) ऐश्वर्य्यपक्षे ॥
(३) माधुर्य्यपक्षे ऐश्वर्य्यपक्षेऽपि

रमयतांवरेत्युक्तेः । रूपौदार्य्यगुणैःसर्वान् रमयतिक्रीड्यतीतिरामस्तं-
सर्वानन्दप्रदमित्यर्थः ॥ नमोस्तुरामदेवायजगदानन्दरूपिणे इति वक्ष्य
माणाच्चजगदानन्दंरूपंविद्यते यस्य स तथोक्तस्तस्मैजगदानन्दरूपिणे ॥
रूपौदार्य्यगुणैःपुंसांदृष्टिचित्तापहारकमितिवचनादपि श्रीरामात्यन्त-
सुन्दररूपदर्शनमात्रेणापहृतदृष्टिचित्ताः सर्वेक्षणमपितद्वियोगमसह-
मानाः श्रीरामेघनंगतेव्याकुलाबभूवुः । पुनरयोध्यायामागतेतस्मिन्ते
सर्वेसुखिनोबभूवुरतोपि श्रीरामस्यसर्वजनानन्दकरत्वमुपपद्यते ॥ हरि
मिति ॥ रूपौदार्य्यगुणैः सर्वदृष्टिचित्तापहारकम् । पक्षान्तरे ॥ स्वभक्ता-
नामविद्यापर्य्यन्तदुःखहारकम् ॥ २२ ॥

एवमितिउपक्रमे ॥ यज्ज्योतिरमलंशिवं तदेवपरमंतत्वं कैवल्य
पदकारणम् । श्रीरामेतिसच्चिदानन्दार्थकरामपदवाच्यत्वेनोक्तं तदेव-
कैवल्यपदकारणंशिवममलंज्योतिरेवमुक्तप्रकारेण चिन्तयेन्मुक्तिकामः॥
सर्वोऽपि । एवमयोध्याख्यनगरमध्ये विराजमानरत्नमण्डपमध्यग-
कल्पतरूमूलदेशविराजमानरत्नसिंहासनमध्यस्थपद्मासनस्थं दशरथ-
पुत्रत्वेनाविर्भूतम् । सहस्रादित्यतेजसं पितुरंकगतंरमणीयविग्रहमि-
न्द्रनीलमणिप्रभंभानुकोटिप्रतीकाशं किरीटेनविराजितम् । नानाप्रकार
रत्नघटितग्रैवेयादिभूषणैरलंकृतं श्रीवत्सकौस्तुभोरस्कंमुक्ताहारोप-
शोभितं द्विभुजमीषत्स्मिताननं तुलसीकुन्दमन्दारादि पुष्पमाल्यैश्चा-
लंकृतं कर्पूरागरुकस्तूर्य्यादिदिव्यगन्धानुलिप्तांगं योगशास्त्राभिरतं
योगदायकम् च सदाभरतादिभ्रातृभिरुपशोभितं विद्याधरादिभिर्नृत्य-
गानादिविशारदैर्नारदाद्यैर्योगीन्द्रैरहर्निशं स्तूयमानं विश्वामित्रवशि-
ष्ठादिमुनिभिस्तथासनकादिमुनिश्रेष्ठैश्च परिसेवितं सुन्दरविग्रहंवीरं
धनुर्बाणधरं मंगलायतनं राजीवलोचनं सर्वशास्त्रार्थतत्त्वज्ञं सर्वानन्द
करं कौशल्यानन्दनत्वेनविराजमानं सर्वदुःखहरणमतिरमणीयविग्रहं
सर्वेषांभावुकानां स्वस्वाभीष्टविग्रहभावनायैबाल्यादित्रिविधवयो-
विशिष्टतयाविराजमानं ज्योतिरमलंशिवं परमंतत्वंविष्णवनेकसहस्र
नामतुल्यसच्चिदानन्दार्थकरामपदवाच्यं कैवल्यपदकारणं स्वभावमानु

मारीसर्वोजनश्चिंतयेदिति सर्वान्प्रतिव्यासोपदेशः । ननुएकस्यदाश-रथेरयोध्यायांवर्तमानस्य परिच्छिन्नविग्रहस्य त्रिविधवयोविशिष्टस्य-दूरस्थानां भावुकानां ध्यानगम्यत्वं तत्राप्यनेकेषां भावुकानां हृदि युगपदाविर्भावत्वं नोपपद्यते ॥ इत्यादिशंकानिवृत्तयेप्राह ॥ विष्णुमिति सर्वव्यापकम् । सर्वव्यापकस्य दाशरथेर्दूरस्थानामपि संनिहितत्वेन तद्ध्यानगम्यत्वं सर्वहृदि गतत्वात् ॥ युगपत्सर्वेषां भावुकानां हृदि तदाविर्भावत्वंचोपपद्यते ॥ इति विष्णुपदस्यस्मरेन्मध्ये दाशरथिमि-त्युक्तदाशरथिपदविशेषणत्वमेवज्ञेयम् ॥ दाशरथिविषयकशंकानिव-र्तकत्वात् ॥ अतः कौशल्यानन्दनं रामं धनुर्बाणधरंहरिं विष्णुमित्ये-तत्पर्य्यन्तानांदाशरथिमिति पदस्यविशेषणानांस्मरेन्मध्ये दाशरथिमिति दाशरथिपदविशेषणत्वद्वारास्मरेदिति क्रियापदेनैवान्वयोद्रष्टव्यः ॥ एवंसंचिंतयेदित्यनेन व्यवहितस्यापि विष्णुपदस्यपाठक्रमादर्थक्रमो वलीयानिति न्यायादुत्तरत्रतत्संबन्धस्य प्रयोजनाभावाच्च पूर्वेणवा-न्वयत्वोपपत्तेरन्यथोक्तशंकायाअनिवृत्तेश्च॥ एवंसंचिंतयेद्यज्ज्योतिर-मलंशिवमित्यस्य प्रयोजनांतरपरत्वाच ॥ तथाहि ॥ धनुर्बाणधरंहरि-मित्येतत्पर्य्यन्तैर्विशेषणैर्विशिष्टं दाशरथिंस्मरेत् ॥ इतितद्ध्यानविधिं परिसमाप्याथदाशरथेः परज्योतिःपरतत्वावतारत्वज्ञापनायाद्दृश्य-त्वेनानुपपन्नध्यानस्यज्योतिषःदाशरथिध्यानैकध्येयविज्ञापनायचाह॥ एवंसंचिंतयेद्यज्ज्योतिरमलंशिवमिति ॥ अत्र किंध्यानंमुक्तिसाधन मिति मुक्तिसाधनस्य ध्यानस्यपृष्टत्वात ॥ तदनन्तरम् ॥ व्यासेनामल-स्यशिवस्यज्योतिषः कैवल्यपदकारणत्वेनोक्तत्वाच्च ॥ कैवलपदकारण ध्यानस्यैव मुक्तिसाधनत्वोपपत्तेश्च कैवल्यपदकारणंयदमलंशिवंज्यो-तिस्तदेवदाशरथित्वेनायोध्यायामाविर्भूतंतस्यदाशरथेरुक्तप्रकारध्या नद्वारातत्कारणभूतंयज्ज्योतिरमलंशिवं परमंतत्वं कैवल्यपदकारणं परात्परतररामपदवाच्यं।चिंतयेत्संसारमुक्तिकामः सर्वोऽपिजन इति ध्यानपरवाक्य समुदायार्थोऽवगंतव्यः ॥ ननुएवंसंचिंतयेद्विष्णुमिति विष्णुपदेनसंचिंतयेदिति । क्रियापदस्यान्वयदर्शनाद्विष्णुपदेनैवक्रिया

पदस्यान्वय उपपद्यते ॥ ननु व्यवहितेन ज्योतिः पदेनेतिचेन्नास्यराम-स्तवराजस्य विष्णुप्रकरणत्वाऽभावेन विष्णोर्दाशरथ्यावतारित्वाऽनुपपत्त्या विष्णुपदस्य विशेष्यपदत्वाऽनुपपत्तेः । अस्यपरमतत्वशिवामलज्योतिः प्रकरणत्वेन ज्योतिषोदाशरथ्यवतारित्वोपपत्त्याऽज्योतिः पदस्यैवविशेष्यपदत्वोपपत्त्या ज्योतिः पदेनैवचिंतयेदिति क्रियापदस्यान्वयोपपत्तेश्च ॥ तत्कुतः ॥ पाठक्रमादर्थक्रमस्यबलीयस्त्वात् ॥ तथाहि ॥ यज्ज्योतिरमलंशिवं तत्रैवपरमंतत्वं कैवल्यपदकारणं श्रीरामेत्युपक्रम्यास्यस्तवराजस्य प्रवृत्तेरस्यज्योतिः कारणत्वोपपत्त्या-कृत्स्नस्य रामस्तवराजस्यसच्चिदानन्दपदार्थकविष्णवनेकसहस्रनाम-तुल्यसमपदवाच्यज्योतिः स्वरूपपरतत्वपरत्वोपपत्त्या ज्योतिःपदस्यैवमुख्यत्वोपपत्त्याविशेष्यपदत्वोपपत्तेः । पुनः किं तत्वं किं परंजाप्यं किं ध्यानम् मुक्तिसाधनमिति त्रिषुप्रश्नेषुमध्येरामंमन्त्रस्य परजाप्यत्वोक्तेः । मुक्तिसाधनस्यध्यानस्यदाशरथिध्यानत्वोक्तेश्च ॥ तत्सहपठितस्यज्योतिस्वरूपपरतत्वस्यापि दाशरथ्यावतारित्वोपपत्तेः तस्याऽदृश्यत्वेन ध्यातुमशक्यस्य भक्तानुग्रहार्थं दाशरथित्वेनाविर्भूतस्यवशिष्ठादि मुनिदृष्टद्विभुजाद्यवयवत्वेन तदोक्तप्रकारेणेदानीं-ध्यातुं योगस्यदाशरथेश्चिंतनस्यैव कैवल्यपदकारणपरज्योतिश्चिंतनत्वोपपत्त्या मुक्तिसाधनत्वोपपत्तेः । यदुपक्रमेउक्तं परमंतत्वंज्योतिरमलंशिवं तदेवमुक्तप्रकारेणचिन्तयेदित्येवंज्योतिः पदेनैवक्रियापदस्यान्वय उपपद्यते ॥ किंचोपक्रमेयानि ज्योतिरमलशिवपदान्युक्तानि तेषामेवध्यानविधिकथनान्तरमेवं संचितयेद्यज्ज्योतिरमलंशिवमिति । पुनः कथनमन्यथानुपपद्यमानं दाशरथेरजहत्स्वाकृत्यादेः परतत्वस्य ज्योतिः स्वरूपस्यावतारत्वमुपपादयतीत्यतोऽपिज्योतिः पदस्यैवक्रि-

---

टि० (१) विष्णुपदेनक्रियापदस्यान्वयोनोपपद्यते इति पूर्वेणान्वयः

(२) ज्योतिःपदेनैवक्रियापदस्यान्वयउपपद्यतेइत्युत्तरेणान्वयः ।

(३) तस्यज्योतिषोऽदृश्यत्वेन ।

यापदेनान्वयउपपद्यते ॥ किंच ॥ एवं संचिंतयेद्यज्ज्योतिरमलंशिव-मित्येतैः ज्योतिरमलशिवपदैः । उपक्रमोक्तं यज्ज्योतिरमलंशिवं पर-मतत्वमनूद्यतस्यैव । एवंसंचिंयेदिति विधिप्रयोगेनस्मरेन्मध्येदाशर-थिमित्युक्तप्रकारेणचिंतनस्यध्यानस्य विधानाच्चज्योतिः पदेनैवचिं-तयेदिति क्रियापदस्यान्वयउपपद्यते ॥ ननु विष्णुपदेनकुतः । रामना-मानेकसहस्रगुणन्यूनविष्णुनामवाच्यस्य तत्कोटिगुणाधिकरामनाम वाच्यात्कोटिगुणन्यूनोपपत्या रामांशत्वोपपत्ते र्विष्ण्वनेकसहस्र-नामतुल्यरामपदवाच्यस्यांश्यवतारित्वानुपपत्तेः । मुख्यत्वाद्विश्ववीज-त्वात् तारकत्वान्महेश्वर । त्वदंशैः स्वीकृतंरामब्रह्मणाभिर्नामतेप्रभो १ इति स्कन्दपुराणोक्त शिववचनाज्जगत्पालकस्यविष्णोः, रामांशत्वाव-गमाच्चस्तवराजोपसंहारे ब्रह्माविष्णुश्चरुद्रश्चदेवेन्द्रोदेवतास्तथेति-रामविभूतिमध्ये जगत्पालकस्य विष्णोर्गणनाच्च॥ विभूतिवर्णनान्तेतु सर्वेषां त्वंपरंब्रह्मत्वन्मयंसर्वमेवहीत्यनेन रामपदस्य परब्रह्मत्वेन सर्वव्यापकत्वोक्तेः । सर्वस्यत्वन्मयत्वेन राममयत्वेन रामव्याप्यत्वो-क्तेश्चविष्णोरपिरामव्याप्यत्वेन तदंशत्वोपपत्या विभूतिमत्त्वांशि-रामावतारित्वानुपपत्तेश्च ॥ तत्रत्यंविष्णुपदं व्यापकार्थमितिचेत् । एवमपिव्यापकार्थस्य तस्यविष्णुपदस्यविशेष्यपदत्वानुपपत्याक्रिया-न्वययित्वं नोपपद्यते ॥ कुतइतिचेत् ॥ व्यापकस्यगुणत्वात् ॥ तदा-श्रयभूतं द्रव्यं किं रूपमित्यपेक्षायां यज्ज्योतीरूपमित्यस्यविष्णुपद-स्यसन्निहितवर्तिनोज्योतिषः पूरकत्वात् पृथिव्यप्तेजोवाय्वाकाश कालदिगात्ममनांसिनवैवद्रव्याणीति नवद्रव्यमध्ये सर्वात्मनस्तेजो-रूपस्य ज्योतिषोगणनाच्चद्रव्यत्वेन तस्यैवज्योतिषो व्यापकत्वगुणा

---

टि० (१) एवंसंचितयेद्विष्णुमित्यत्रत्यम् ।

(२) तस्यव्यापकस्यविष्णुपदस्याश्रयभूतं किं रूपं कीदृशं स्वरूप मित्यपेक्षायामाह ।

श्रयत्वेन क्रियान्वयित्वोपपत्तेश्च[1] ॥ तज्ज्योतिः किंस्वरूपमित्यपेक्षायास्तु यज्ज्योतिरमलंशिवं परमंतत्वं श्रीरामेतीति रामपदवाच्यत्वेनोक्तस्यज्योतिषो द्विभुजाद्यवयवविग्रहत्वनिश्चयस्यैवपूरकत्वात्तस्यैव व्यापकत्वापिगुणाश्रयस्यक्रियान्वयत्वेन प्रधानपदत्वंनिष्पद्यते ॥ अत्रैतदुक्तंभवति ॥ किंध्यानंमुक्तिसाधनम् ॥ इतिप्रश्नस्योत्तरत्वेनस्मरेन्मध्ये दाशरथिमित्यारभ्यधनुर्वाणधरंहरिमित्यन्तेन तद्ध्यानमुक्त्वातदनन्तरम् ॥ दाशरथेः परिच्छिन्नविग्रहस्यदूरस्थभावुकानांहृदि युगपदाविर्भावो नोपपद्यते ॥ इतिशंका निवृत्तयेविष्णुमित्युक्तम् ॥ तैर्विष्णुमित्यन्तैः सहस्रादित्यतेजसमित्यादिभिर्विशेषणैर्विशिष्टं दाशरथिमयोध्यानगरमध्यस्थरत्नमण्डपमध्यगकल्पतरुमूलदेशस्थरत्नसिंहासनमध्याष्टदलपद्मासनमध्यस्थंस्मरेदिति विधिनादाशरथेर्ध्यानं विधायानन्तरम् ॥ दाशरथेरजहत्स्वाकृतिस्वभावादेः परतत्वज्योतिःरूपस्यावतारत्वज्ञापनाय ज्योतिषोऽदृश्यत्वेनानुपमत्वेन च दृष्टान्ताभावात्कथंचिदपिध्यातुमशक्यस्य दृष्टरामस्वरूपगुणविभूत्यादि वशिष्ठादिमुनिभिरुक्तेनस्वोक्तेन च दाशरथिध्यानेनैवतद्ध्यालत्वज्ञापनाय च ॥ एवं संचिंतयेद्विष्णुं यज्ज्योतिरमलंशिवमित्युक्तं तेन ॥ यदुपक्रमेउक्तम् ॥ यज्ज्योतिरमलंशिवम् ॥ तदेवपरमंतत्वं कैवल्यपदकारणं श्रीरामेतिपदवाच्यं तदेवंचिंतयेत् स्मरेन्मध्ये दाशरथिमित्यारभ्यधनुर्वाणधरंहरिं विष्णुमित्यंतेनोक्तेनप्रकारेणचिंतयेद्ध्यायेदिति ज्ञापितंभवति ॥ तत्र[2] विष्णुपदस्य विष्णोः प्रकरणाभावेन पूर्वोक्तप्रका॥

---

टि:(१) तस्यैवज्योतिषः पदस्यैवव्यापकत्वगुणाश्रयत्वेनतस्यैवज्योतिःपदस्यैव क्रियान्वयित्वोपपत्तेः। चपुनः विष्णुपदस्य क्रियान्वयित्वेनोपपद्यते इति पूर्वेणान्वयो ज्ञातव्यः।

२) तत्र ध्याने विष्णोः प्रकरणाभावेन विष्णुपदस्य विशेष्य पदत्वं नोपपद्यते। इति पूर्वेणान्वयः। १।

रेण च दाशरथ्यावतारित्वानुपपत्तेर्नविशेष्यपदत्वमुपपद्यते नापि[1] ज्योतिःपद विशेषणत्वम् ॥ ज्योतिषः स्वतोव्यापकत्वात् । व्यावर्त्याभावेन तद्[2]व्यावर्तकस्य व्यापकार्थकस्य विष्णुःपदस्यज्योतिःपदविशेषणत्ववैयर्थ्यापत्तेः । अतः परिशेषात् तन्निष्ठ[3]दाशरथि पदविशेषणत्वस्य सार्थक्याच्च दाशरथिपदविशेषणत्वं प्राप्योक्त शंकानिवर्तकत्वेन सार्थकंभवति तद्विष्णुपदमितिसर्वंनिरवद्यम् ॥ तद्व्याख्याकर्तृभिस्तु धनुर्बाणधरंहरिमित्येतदन्तं व्याख्यायानन्तरम् । दाशरथेः परिच्छिन्नविग्रहस्यदूरदेशस्थानां भावुकानां हृदियुगपदाविर्भावोनोपपद्यते ॥ इत्यादिशंकानिवृत्त्यर्थं विष्णुमितिपदं दाशरथिपदविशेषणं भवतीत्युक्तंतद्वियुक्तम् ॥ विष्णुपदस्यदाशरथिपद विशेषणत्वं विना दाशरथिगतोक्तशंकायाअनिवृत्तेः । यत्तु तरेवंसंचिंतयेद्विष्णुं यज्ज्योतिरमलंशिवमितयत्र । एवंसंचिंतयेद्विष्णुमित्येवंविष्णुपदस्य क्रियान्वयित्वेनविशेष्यपदत्वं निर्दिश्यज्योतिरमलशिवपदानां तद्विशेषणत्वेनव्याख्यानंकृतंतन्नोपपद्यते ॥ दाशरथिविशेषणत्वेनव्याख्यातस्य विष्णुपदस्यपुनस्तत्रैवविशेष्यपदत्वेन व्याख्यानस्यस्वपूर्वापरवचनविरोधित्वात् ॥ शिवामलपदविशेषितत्वेन स्वयंविशेष्यभूतस्यज्योतिःपद-

---

(१) अपि इति निश्चयेन विष्णुपदस्य ज्योतिः पदविशेषणत्वं नोपपद्यते ॥ व्यावर्त्यार्थं विशेषणं व्यावर्त्योनिषेधः ।

(२) तत्तस्य व्यापकत्वस्य व्यावर्तकस्तस्यतद्व्यावर्तकस्य ।

(३) तन्निष्ठ विष्णुपदनिष्ठदाशरथिपदस्य विशेषणत्वं दाशरथिपद विशेषणत्वं तस्य दाशरथिपदविशेषणत्वस्य सार्थक्यात् । अर्थेण सहितः सार्थकस्तस्य भावः सार्थक्यस्तस्मात् च पुनः दाशरथिपदस्य विशेषणत्वं प्राप्यपूर्वोक्ताशंका दाशरथेः परिच्छिन्न विग्रहस्येत्यादिकातस्यां निवर्तकत्वेन विष्णुपदं सार्थकं भवतीत्यन्वयः ।

स्यविष्णुपदविशेषणत्वानुपपत्तेश्च ॥ शिवाऽमलपदेऽपिविष्णुपदस्य विशेषणभूते इतिचेन्न ॥ यज्ज्योतिरमलंशिवं तदेवपरमंतत्वंकैवल्यपद कारणमित्युपक्रमे शिवामलपदयोर्ज्योतिः पदविशेषणत्वनिश्चयेना[1] त्रापितयोर्ज्योतिः पदविशेषणत्वनिश्चयात् ॥ तेषामेवज्योतिरमलशिव पदानांपुनरत्रकथनंतु दाशरथेः परतत्वज्योतिषोऽवतारत्वज्ञापनार्थम्। किंच विष्णुसंचिंतयेदिति विष्णुपदस्य यथाश्रुतत्वेनक्रियान्वयित्वस्वी- कारपक्षेदाशरथिमित्यारभ्य धनुर्वाणधरंहरिमित्यंत्यानां दाशरथिपद विशेषणानां विष्णुपदविशेषणत्वापत्त्यास्मरेन्मध्ये दाशरथिमित्यस्य दाशरथिपदविशेष्यत्वबोधकस्यस्मरेदिति क्रियापदस्यवैयर्थ्यापत्तिः॥ तत्कुतः ॥ एकस्मिन्वाक्ये द्विपदयोर्विशेष्यपदत्वानुपपत्तेः ॥ बला- द्वयोर्विशेष्यपदत्वस्वीकारे दाशरथिपदविष्णुपदयोरन्योन्यंविशे- ष्यत्वविशेषणत्वापत्तिश्च ॥ तस्मात्पूर्वोक्तप्रकारेण स्मरे- न्मध्ये दाशरथिमित्यारभ्य धनुर्वाणधरंहरिविष्णु मित्येतत् पर्य्यन्तं वाक्यं दाशरथिध्यानबोधकत्वेन यथार्थकंभवति॥ तत्र एवंसंचिंतये- दित्याभ्यां पदाभ्यां व्यवहितमपि विष्णुपदम् ॥ त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलंत्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे सकलंत्यजेत् ॥ १ इति वचनात् ॥ पाठक्रमादर्थक्रमोबलीयानिति वचनाच्च दाशरथि पदविशेषणत्वं प्राप्यदाशरथिप्रासोक्तशंकानिवर्तकत्वेन स्वार्थं लभते। एवं संचिंतयेद्विष्णु यज्ज्योतिरमलं शिवमिति वाक्यं तूक्तप्रकारस्य दाशरथिध्यानस्यैव ज्योतिः स्वरूपपरतत्वध्यानत्वज्ञापकत्वेन स्वार्थं[2] लभते ॥ इति द्वयोरपिवाक्ययोर्भिन्नार्थकत्वेन न कश्चिद्विरोधः । यदि तु तद्भिन्नवाक्यस्थस्य विष्णुपदस्य दाशरथिपदविशेषणत्वंनोपपद्यते ॥ इत्युच्यते ॥ तदाविष्णोःप्रकरणाद्यभावाद्दाशरथ्यवतारित्वानुपपत्ते -

---

टि० (१) अत्रापितयोः शिवामलपदयोर्ज्योतिः पदस्यविशेषणत्व निश्चयात् ।

टि० (२) विष्णुपदः स्वार्थंलभते इतिपूर्वेणविष्णुपदेनान्वयोज्ञातव्य

श्च विष्णुपदस्य विशेष्यपदत्वानुपपत्तेरमलशिवपदाभ्यां विशेषितत्वेन विशेष्यभूतस्य ज्योतिः पदस्य विष्णुपदविशेषणत्वानुपपत्तेश्च ॥ प्रत्युत ॥ अविशेषितस्य विष्णुपदस्य शिवामलपदविशेषितज्योतिःपदविशेषणत्वोपपत्तेश्च शिवस्यामलस्य ज्योतिषोदाशरथ्यवतारित्वोपपत्त्यापि ज्योतिः पदस्य विशेष्यपदत्वोपपत्तेः शिवाभलपदविशेषितत्वेन ज्योतिः पदस्य विशेष्यपदत्वस्फुटत्वाच्च ॥ विष्णुपदं ज्योतिःपदविशेषणत्वं प्राप्यस्वार्थं लभताम् ॥ किंचैवंसत्यपितस्य ज्योतिषोऽव्यापकत्वास्वीकारेऽनीश्वरत्वापत्तेर्ज्योतिषः स्वयं व्यापकत्वाद् व्यावर्त्याभावेन तद्विशेषणीकृतस्य विष्णुपदस्य वैयर्थ्यापत्तेर्विष्णुमिति विशेषणं विनादाशरथिगतोक्तशंकाया अनिवृत्तेश्च ॥ त्यजेदेकं कुलस्यार्थे ॥ इत्याद्युक्तप्रकारेण विष्णुपदं दाशरथिपदविशेषणत्वं प्राप्योक्तशंकानिवर्तकत्वेनैवसार्थकं भवतु ॥ यदितुवाक्यान्तरस्थस्य विष्णुपदस्यवाक्यान्तरस्थदाशरथिपदविशेषणत्वं कथमपिनोपपद्यते तदाभवतु विष्णुपदं ज्योतिः पदस्य विशेषणं ज्योतिषोऽस्फुटस्य[1] व्यापकत्वस्फोटकत्वेन सफलं चेति न कथमपि विष्णुपदस्य विशेष्यपदत्वमुपपद्यते ॥ शिवामलपदविशेषितत्वेन विशेष्यपदत्वेन निश्चितस्य ज्योतिःपदस्यतद्विशेष्यपदत्वबाधत्वात् ॥ अस्मिन्पक्षे[2] श्रीवत्सकौस्तुभोरस्कमितीदं सहस्रादित्यतेजसमितीदं च दाशरथेः परमेश्वरत्वबोधकं तद्गतोक्त[3]शंकानिवर्तकमस्तु ॥ सहस्रादित्यतेजसो दाशरथेः सर्वगतत्वेनसर्वव्यापकत्वोपपत्तेरित्यलमितिविस्तरेण ॥

---

(१) न स्फुटस्य अस्फुटस्य ॥

टि० (२) अस्मिन्पक्षे विष्णुपदस्य ज्योतिःपदस्य विशेषणस्वीकारपक्षे।

(३) तद्गतेतितस्मिन्दाशरथौगताप्राप्ताउक्तशंकादाशरथेः परिच्छिन्नविग्रहस्येत्यादिपूर्वोक्तायातस्या निवर्तकमस्तुअयं पक्षः।

अत्रपरमतत्वावतारभूतस्य दाशरथेः रूपमिन्द्रनीलमणिप्रभमुक्तं सहस्रादित्यतेजस्तुल्यप्रकाशं च ॥ अन्यत्र ॥ क्वचिन्मेघाभं क्वचिदतसीपुष्पसंकाशम् । क्वचिदादित्यवर्णं तमसः परस्तादित्युक्तम् ॥ नारदस्तु ॥ उत्फुल्लामलकोमलोत्पलदलश्याममितिवक्ष्यति ॥ अस्मद्गुरुभिः श्रीतुलसीदासैः । केकीकंठाभनीलमित्युक्तम् ॥ तेनमेघवत्स्निग्धमिन्द्रनीलमणिचिक्कणमभेद्यं च नीलम् ॥ अतसीपुष्पवत्कोमलमरुणश्वेतगर्भं नीलं च । केकीकंठाभवदरुणतागर्भंविचित्रंनीलं च ॥ आदित्यवर्णवत्प्रकाशमानमधर्ष्यं कात्स्न्र्येन द्रष्टुमशक्यंचेति ॥ परज्योतिःस्वरूपस्यपरतत्वस्यरूपमस्तीत्यवगम्यते ॥ न चेदृशंरूपं[1] तद्विग्रहस्यास्ति ॥ नतु तत्स्वरूपस्य ॥ यद्रूपमनामयमित्येवमादिश्रुतिभिस्तद्रूपगुणादिप्रतिषेधादितिवाच्यम् ॥ एवमादिश्रुतीनां प्राकृतरूपगुणादि प्रतिषेधेतात्पर्य्यावगमात् ॥ तथाहि ॥ चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ॥ ब्रह्मणोरूपकल्पनेत्येषारामतापिनीया श्रुतिः ॥ ब्रह्मणः शरीररहितत्वं वदति ॥ अर्द्धमात्रात्मकोरामो ब्रह्मानन्दैकविग्रहइत्येषारामतापनीयाश्रुतिः । तस्यैवरामाख्यस्य ब्रह्मणोब्रह्मानन्दैकविग्रहत्वेन दिव्यमङ्गलविग्रहत्वंवदति ॥ अनयोर्द्वयोः श्रुत्योः परस्परं विरुद्धार्थत्वेनोभयोरप्रमाण्यापत्तेरयोग्यात् । ब्रह्मानन्दैकविग्रह इतिदिव्यविग्रहप्रतिपादकश्रुत्यनुरोधेनाशरीरिणइतिश्रुतेः । प्राकृतशरीरनिषेधे तात्पर्य्योऽवगम्यते । यथा तथैव ॥ यः सर्वज्ञः सर्ववित्परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकीज्ञानबलक्रिया चेति परतत्वनिष्ठ स्वाभाविकदिव्यज्ञानादिगुणवत्वबोधकश्रुत्यविरोधेन ॥ साक्षीचेताः केवलो निर्गुणश्चेति श्रुत्युक्तनिर्गुणपदस्य प्राकृतगुणनिषेधेतात्पर्य्योऽवगम्यते[2] निकृष्टगुणरहितत्वं निर्गुणत्वमिति तल्लक्षणात् ॥ महद्गुणानामाधा

(१) चपुनः इति न वाच्यमित्युत्तरेणान्वय इतीतिकिं तस्यश्रीरघुनन्दनविग्रहस्येदृशंरूपमस्तीति ।

टि० (१) महद्गुणानामाधारः प्राकृतैः गुणैः रहितः । इतिद्वौहेतूक्तेवे-

णो रहितः प्राकृतैर्गुणैः । एष सर्वस्य विधृतिहेतुः श्रुत्याप्रकीर्तितः ॥ १
इतिपंचरात्रे॥ एकस्यैव श्रीरामस्य दिव्यगुणवत्वेन प्राकृतगुणरहितत्वेन
च सगुणत्व निर्गुणत्व ज्ञापन द्वारा सर्वकारणत्वोक्तेः । सगुणोनिर्गु-
णो विष्णुर्ज्ञानगम्यः सनातनः । इति । एकस्यैवविष्णोर्दिव्यगुणवत्वेन
प्राकृतगुणरहितत्वेन च सगुणत्वनिर्गुणत्वोक्तेश्च ॥ तथैव ॥ मन एव
मनुष्याणां कारणंबंधमोक्षयोः ॥ बंधाय विषयासंगिमुक्त्यै निर्विषयं
मनः ॥ १ ॥ इत्यत्रत्यं, विषयासंगीतिपदं प्राकृतविषया सक्तेर्मनसो
बंधहेतुत्वंवदति । भगवदासक्तमनसोमोक्षहेतुतवस्य श्रुतिस्मृतिप्रसि-
॥ द्धत्वात् ॥ तथैव ॥ निर्विषयंमन इतिपदंमोक्षकारणस्यमनसः प्राकृत
विषयरहितत्वपूर्वकं भगवदेकनिष्ठत्वंवदति । प्राकृतविषयरहितस्या
पिमनसो भगवदेकविषयत्वं विनामोक्ष कारणत्वानुपपत्तेः । तदेवंयथे-
दंनिर्विषयं पदंप्राकृतविषय निशेधपरम् । नतुभगवद्रूपादिदिव्यविषय
निशेधपरम् ॥ तथैवनिर्गुणमितिपदंप्राकृतगुणनिषेधपरम् । नतुगुण
निशेधपरम् । तस्य दिव्यगुणनिसेध परत्वांगीकारे स्वाभाविकीज्ञान
बलक्रियाचेति ज्ञानादीनां भगवत्स्वाभाविकगुणवत्ववाद्यनेकश्रुति
वैयर्थापत्तेः । एवंसर्वगंधः सर्वरसः सर्वस्पर्शः ॥ इतिभगद्दिव्यगंधादि
वादिश्रुत्यविरोधेन ॥ अशब्दमस्पर्शमरूपम् इत्यस्याः श्रुतेः प्राकृतगंधा-
दिप्रतिषेधेतात्पर्यमवगम्यते ॥ एवं यद्वाचानाभ्युदितंयंमनोनमनुते॥
यतोवाचोनिवर्तंते अप्राप्यमनसासह । इत्येवमाद्याः श्रुतयोब्रह्मणोम-

---

सुश्रुत्वा एष श्रीरामचन्द्रः सर्वस्यजगतः विधृतिः कारणं
मुनिभिः प्रकीर्तितः कथितः ।
(१) यत इति सार्वविभक्तिकोतसिल् इत्यनेन कर्मणिद्वितीया
यतोनाम यंश्रीरघुनन्दनंनप्राप्य मनसासहवाचः निवर्तंते
मनः श्रीरघुनन्दनस्यस्वरूपस्य सौन्दर्यलावण्य सौकु-
मार्य माधुर्यादिकं मननकर्तुमसमर्थंवाचः श्रीजानकीश-
स्यगुणचरित्रैश्वर्यादिकंवर्णितुमसमर्थाः सत्योनिवर्तंते

लिन वाङ्मनसोरगोचरत्वं वदन्ति । मनसातु विशुद्धेनाभिक्लृप्तः।
इत्यनेनयाश्रुत्याब्रह्मणोविशुद्धमनोगोचरत्वोक्तेः। तथैव। न संदृशेति-
ष्ठतिरूपमस्य न चक्षुषापश्यति कश्चिदेनं। हृदाहृदिस्थंमनसा य एन-
मेवंविदुरमृतास्ते भवंतिइत्येकेत्रश्रुतिः। न रूपमस्यसंदृशेतिष्ठति इत्य-
नेन तस्यरूपवत्वम्। नसंदृशेतिष्ठतीतितस्यरूपस्यदिव्यत्वेनमलिनेंद्रि-
याहृश्यत्वंज्ञापयित्वा तदेवन चक्षुषापश्यति कश्चिदेनमिति स्फुटमुक्त्वा
पुनो मनसायएनमेवंदिव्यरूपादिमत्वंविदुरित्यनेन तद्रूपादेर्विशुद्धम-
नोगोचरत्वंज्ञापयामास॥ तथैव ॥ दृश्यतेत्वग्र्यया बुद्ध्यासूक्ष्म या
सूक्ष्मदर्शिभिरित्येषा विशुद्धान्तःकरणैः सूक्ष्मया बुद्ध्या, इत्यनेनविशु-
द्ध्या प्राकृतविषयवितृष्णया परमात्मनिप्रवेष्टुंयोग्ययाबुद्ध्याहृश्यत्वं-
वदति तथैव। आत्मावाअरेद्रष्टव्यइतीयमप्यात्माद्रष्टव्यो द्रष्टुंयोग्य
इति रूप वत्वंविनात्मनोदृश्यत्वयोग्यताऽनुपपत्तेस्तस्यदिव्यसूक्ष्मरूप-
वत्वं ज्ञापयति। एवमन्याअपीदृश्यःश्रुतयोज्योतिरात्मकस्यपरमात्मना
परतत्वस्यप्राकृतरूपादिमत्वं प्रतिषिध्यतस्यदिव्यरूपादिमत्वंज्ञापयती
तितद्रूपादिप्रतिषेधकानांतद्रूपादिविधायकानामुभयविधिश्रुतीनामेकवा
क्यताद्वारापरतत्वस्यदिव्यरूपवत्वंनिष्पद्यते॥ तच्चरूपंश्रुतिभिःसामा-
न्यतउक्तं श्रुत्यर्थप्रकाशकैरिन्द्रनीलमणिप्रभमित्यादिस्मृतिवचनैर्वेदत-
त्वज्ञनारदव्यासाद्युक्तेः। इन्द्रनीलमणिप्रभं चिक्कणमभेद्यंस्निग्धंश्वेतारु-
णतागर्भश्यामम्॥ आदित्यतेजोवदप्रधर्ष्यंस्वप्रकाशंविशुद्धमनोबुद्ध्या
दिभिर्दृश्यं दर्शनयोग्यम्॥ तत्स्वरूपस्यानंतत्वात्तद्रूपादीनामप्यनंत-
त्वोपपत्तेः। नित्यमुक्तैरपिकात्स्न्येंनद्रष्टुं ज्ञातुं चाशक्यमितीदृशमस्ती-
त्यवगम्यते, तदेवंपरज्योतिषईदृशंरूपमस्तीतिश्रुतिस्मृतिभिरवगमात्
ज्योतिर्मयं राममहं भजामीतिस्मृतेः। रामचन्द्रश्चिदात्मक इतिताप-
नीयश्रुतेश्चसत्यंचिदानन्दमयं स्वरूपमितिश्रीरामस्वरूपस्यचिदात्म-

---

तुष्णींबभूवुरित्यभिप्रायः।

कत्ववक्ष्यमाणाच्च ॥ श्रीशार्ङ्गधारिणं रामं चिन्मयानंदविग्रहम् ॥ चिर. राममहातेजाः सच्चिदानन्द विग्रहः । इति रामविग्रहस्यापि चिदा. त्मकत्ववक्ष्यमाणाच्च ॥ तत्स्वरूपविग्रहयोर्द्वयोरपिचिदात्मकत्वेनैक. त्वावगमात् ॥ यत्परतत्वस्यपरज्योतिषोरूपं तदेवतद्विग्रहस्यरूपम् ॥ यच्चतत्विग्रहस्य रूपंतदेवतत्स्वरूपभूतस्य परज्योतिषोरूपमस्तीत्य. वगमादुक्तप्रकारमिन्द्रनीलमणि प्रभवमेव परज्योतिः स्वरूपस्यपरत. त्वस्य रूपमस्तीत्यवगंतव्यम् ॥ परतत्वस्वरूपविग्रहरूपगुणविभूत्यादि याथात्म्यजिज्ञासुभिः तच्चपरस्वरूपमिन्द्रनीलमणिप्रभोद्विभुजाद्यव. यवः सच्चिदानन्दार्थक रामपदवाच्योरामएवेति निश्चीयते ॥ यत्परं यद्गुणातीतं यज्ज्योतिरमलंशिवम् ॥ तदेवपरमंतत्वं कैवल्यपदका. रणम् १ श्रीरामेत्युपक्रमे उक्तत्वात् ॥ परात्परतरंतत्वं सत्यानन्दंचि. दात्मकम् । मनसासिरसानित्यं प्रणमामि रघूत्तममिति मध्येवक्ष्य. माणात् ॥ नमामिरामं तमसःपरस्तात् । आदित्यवर्णंतमसः परस्तात्॥ परात्परंयत्परमंपवित्रं नमामिराम महतोमहांतम् ॥ सत्यंसत्यंपुनः सत्यंसत्यमेतदिहोच्यते ॥ रामःसत्यंपरंब्रह्मरामात्किंचिन्न विद्यते १ इत्येवमुपसंहारेवक्ष्यमाणाच्च ॥ इतिरामपदेनासौपरंब्रह्माभिधीयते । इतिश्रुत्यारामपदाभिहितस्य परब्रह्मत्वोक्तेश्च ॥ स्थूलमष्टभुजंप्रोक्तंसू. क्ष्मंचैवचतुर्भुजम् । परन्तुद्विभुजंप्रोक्तं तस्मादेतत्त्रयंयजेदिति पंचरात्रे परविग्रहस्य द्विभुजत्वोक्तेः । पुनस्तत्रैवपंचरात्रे ॥ द्विहस्तमेकवक्त्रं च शुद्धस्फटिकसंनिभम् । सहस्रकोटिवह्नींदुलक्षकोट्यर्कसन्निभम् ॥ १॥ मरीचिमण्डलेसंस्थंबाणाद्यायुधलांछितम् । किरीटहारकेयूरवनमाला. विराजितम् २ पीताम्बरधरंसौम्यं रूपमाद्यमिदंहरेरित्यनेन द्विभुजा. द्यवयवतोमरीचिमंडलसंस्थत्वेन ब्रह्मगायत्रीप्रतिपाद्यत्वं हरेरिदमाद्य. रूपमित्यनेन तस्य परतत्वपरविग्रहत्वं चेत्युक्तंभवति यस्मात्तस्माद्द्वि. भुजाद्यवयवस्यविग्रहस्य परविग्रहत्वोक्तेरादिविग्रहत्वोक्तेश्च गायत्री प्रतिपाद्यत्वाच्च रघूत्तमस्य सत्यानन्दचिदात्मकपरात्परतत्वोक्तेश्च ॥ राम रामेति विष्णवनेकसहस्रनाम तुल्यत्वोक्तिभिश्च ॥ रामनाम्नः सर्व

वेद सर्वमन्त्रजप फलात्कोटिगुणाधिकपुण्यप्रदत्वोक्तेश्च ॥ ज्योति-रात्मक परात्परतत्वंद्विभुजः श्रीरामपदेति तत्स्वरूपरूपं नामगुणच-रितादीनां सर्वोत्कृष्टत्वप्रतिपादकैः श्रुतिस्मृतिवचनैश्चावगम्यते ॥ इति दिक् ॥ अत्रेदमपिज्ञेयमस्ति। युधिष्ठिरेण व्यासंप्रतिपरतत्वंपरंजाप्यं च मुक्तिसाधनंचेति प्रश्नत्रयकृतम् ॥ तत्र यत्परमित्यारभ्य श्रीरामे-त्यंतेनेन प्रथमप्रश्नस्योत्तरं दत्वा श्रीरामस्यपरमतत्वमुक्तम् ॥ परंजा-प्यंतारकं ब्रह्मसंज्ञकमिति द्वितीयप्रश्नोत्तरत्वेन राममंत्रस्यपरंजाप्य त्वमुक्त्वा ॥ तस्यैवरामस्यपुनः परतत्वत्वंदृढीकृतम् ॥ किंध्यानमि-तितृतीयप्रश्नोत्तरत्वेनदाशरथिध्यानमुक्तम् । तेनयत्सच्चिदानन्दार्थक-रामपदवाच्यं परमंतत्वंतदेवदाशरथिरितिज्ञापितं श्रीमद्व्यासेनपुन-र्ध्यानवर्णनांते. एवंसंचितयेद्यज्ज्योतिरमलंशिवंज्योतिः परमंतत्वं तदुक्तप्रकारकदाशरथिध्यानेनचिंतयेत् ॥ ध्यायेदित्यनेनदाशरथेः पर-मतत्वस्वयमवतारत्वंदृढीकृतं तद्युक्तंयथार्थत्वात् ॥ परंत्वत्रेयमाशंका तत्परमतत्वं ज्योतिर्येनप्रकारेण सनातनत्रिपाद्विभूतौ तिष्ठतितत्प्र-कारकंतद्ध्यानं किंनोक्तमितिचेदुच्यते ॥ परमपदस्थं परमतत्वमेकेन परत्वेनगुणेनयुक्तम् ॥ तदेवात्राविभूतं सत्परत्वेनसौलभ्येनचेतिगुण-द्वयेनयुक्तंवभूवातः परत्वेसतिसौलभ्यात्स्वभक्तानांहितार्थं मात्रात्त-दाविर्भावाच्चदाशरथिर्व्यासादीनामतिप्रियः । पुनः सपरिकरस्यपरत-त्वस्य दाशरथेर्वशिष्ठादिभिर्दृष्टत्वाद्दृष्टवस्तुवर्णनस्य निःसंदेहत्वाद्दृष्ट-वस्तुवक्तृवचनेषु दृढविस्वासत्वात्तद्ध्यानस्य सुलभत्वाच्च दाशरथेः परस्वरूपत्वेन तद्ध्यानस्यमुक्तिप्रदत्वाच्च तद्भक्तानांहितार्थाय दाश-रथेरेवध्यानमुक्तम् ॥ न[१] परमपदस्थस्यव्यासादिभिः॥ कुतः परमपदस्थ-स्यतत्परिकरस्यचादृष्टत्वेन यथातथ्येनतद्ध्यानवर्णनस्यानुपपत्त्याके-वलशास्त्रोक्तरीत्यैतद्ध्यानवर्णनत्वोपपत्तेः । शास्त्रवचनानामपिसंदिग्ध

---

टि० (१) परमपदस्थस्य परमतत्वस्यज्योतिषोध्यानं व्यासादिभि-र्नोक्तम् ॥

त्वेन याथार्थ्येनतद्ध्यानज्ञानानुपपत्तेश्च॥ पुनस्तद्ध्यानस्यातिदुष्करत्वाच्चमौक्तमन्त्रव्यासेन नारदेनच परमपदस्थस्वप्रकारेणतद्ध्यानम्॥ किंचस्वभक्तानां हितार्थमत्रावतीर्णत्वान्नारदव्यासादिचक्षुर्गोचरत्वाच्चपुनस्तेषांपूजकत्वाच्च यथा दाशरथावतिप्रीतिर्नारदादीनामवगम्यते न तथा परमपदस्थे तत्रोक्तहेतूनामभावात् ॥ यतः कौशल्यानन्दनरघूत्तमेत्यादीनिदाशरथिपराणि पदानिपुनः पुनः पठंति यथा न तथा परंपदपराणिपदानि। वस्तुतस्तुदाशरथिविषयाणिपदान्यतिप्रीत्यापठंति ॥ परतत्त्वविषयाणिपदानितुपरतत्त्वज्ञापनायैव पठंति ॥ अथ नारदोपास्यत्वाच्च सर्वोपिजनस्तमेवोपासीतेतिज्ञापयन् ॥ स्तवराजंपुराप्रोक्तं नारदेनचधीमतेति पूर्वोक्तेन सहसंगतिंकुर्वन् ॥ नारदकृतध्यानकथनपूर्वकं स्तवराजमवतारयति ॥ प्रहृष्टेति ॥ तत्र ॥ आत्मावारेद्रष्टव्यः श्रोतव्योमंतव्योनिदिध्यासितव्यइति श्रुत्युक्तरीत्या ॥ अद्भुतंहरिंचिन्तयन्निति हरिस्वरूपस्यमननंकुर्वन् ॥ यदेकं यक्षपरमित्यादिश्लोकद्वयेन तन्निदिध्यासनं कुर्वन्॥ ताभ्यांमनननिदिध्यासनाभ्यां तंसाक्षात्कृत्य ॥ कविंपुराणमित्याद्युक्तप्रकारं रामंददर्श ततश्चश्रीरामतत्त्वमननान्मुनिः ॥ तद्दर्शनाच्चमुनिवर्य्यः ॥ श्रीरामदर्शनजानंदनिमग्नत्वेन प्रहृष्टमानसश्चभूत्वा ॥ सनारदः नारदेन च धीमतेतिपूर्वोक्तः ॥ योरामंददर्श स इति वा ॥ परात्परतरमादिदेवंरघुनन्दनंतुष्टाव ॥ २३ ॥

सर्वलोकहितार्थाय तुष्टावरघुनन्दनम् ।
कृतांजलिपुटोभूत्वा चिंतयनद्भुतं हरिम् ॥ २४॥

---

टि० (१) तत्रतस्मिन्परमपदस्थे परमतत्त्वे, उक्तहेतूनां स्वभक्तहितार्थमत्रावतीर्णत्वनारदव्यासादिचक्षुर्गोचरत्वं पुनस्तेषांपूजकत्वादिहेतूनामभावात् परमपदस्थे परमतत्त्वे नारदादीनां तथा प्रीतिर्नभवति ।

किमर्थमितिचेत् ॥ मयाकृतेनस्तवराजेन सर्वेऽपिलोकाः। श्रीरामंस्तुत्वाकृतार्थाभवेयुरित्येतदर्थमित्याह ॥ सर्वलोकहितार्थायेति ॥ नकेवलंशास्त्रजनितपरोक्षज्ञानेनरामं वक्ष्यमाणप्रकारकं नारायणादिरूपिणं सर्वोपनिषत्सारार्थप्रकाशकनिरंजननिराकाराद्वैततमः परस्तादादिशब्दवाच्यं परज्योतिः ॥ परतत्वपरब्रह्मात्मकंज्ञात्वा तत्तत्प्रकारत्वेन तुष्टाव ॥ किंत्वद्भुतंहरिंचिंतयन्मननंनिदिध्यासनात्मिकया तत्परभक्त्याप्तं साक्षाद्दृष्ट्वाह्यपरोक्षज्ञानेन तमुक्तप्रकारकं ज्ञात्वेत्यभिप्रायेण राममेवपरात्परतरं तत्वंतद्दर्शनात्तस्य तथाविधज्ञानवत्वं च ज्ञापयति भगवान् व्यासः ॥ कृतांजलिपुटोभूत्वेत्यारभ्य । अनंतवीर्यं रामंददर्शेत्यंतेन वक्ष्यतिचैवमग्रे रामस्यस्वयंपरब्रह्मत्वं पंचसपथंकृत्वा ॥ सत्यं सत्यं पुनः सत्यं सत्यमेतदिहोच्यते ॥ रामः सत्यं परं ब्रह्मरामात्किंचिन्नविद्यते ॥ १ । इति ॥ कृतांजलिपुटोभूत्वेत्यादीनां रामंददर्शे त्युत्तरस्थेन क्रियापदेनान्वयः कृतः ॥ बद्धः अंजलिपुटोयेन स कृतांजलिपुटः ॥ अंजलिः परमामुद्रासद्योदेवप्रसादिनी ॥ इत्युक्ते श्रीरामस्यशीघ्रप्रसादार्थमंजलिपुटंबद्ध्वा॥ अद्भुतंस्वप्रकाशानंतचिदेकरसात्मकस्यापि मूर्त्ति(१)मत्वात् ॥ तदेकरसमूर्त्तिमत्वेपि मिथोविलक्षणनखरकुंतलादिमत्त्वादत्याश्चर्यरूपमित्यर्थः ॥ अतएवहरिम् ॥ स्वस्यरूपादिदर्शनमात्रेणपुंसांमहर्षिणामपिदृष्टिचित्तापहारकम् ॥ २४ ॥

**यदेकंयत्परंनित्यंयदनंतं चिदात्मकम् ॥**
**तदेकंव्यापकंलोके तद्रूपंचिंतयाम्यहम् ॥ २५ ॥**

चिंतनप्रकारंवदति ॥ यदेकमिति ॥ एकमद्वितीयंब्रह्मचिन्मयस्याद्वितीयस्य ॥ नतत्समश्चाभ्यधिकश्चदृश्यते ॥ नतस्यप्रतिमास्तियस्यनाममहद्यशः ॥ इत्येवमादि श्रुत्युक्तंस्वसमाधिकरहितंपरतत्वमि-

---

टि० (१) परिच्छिन्नविग्रहो मूर्त्तिरितिन्यायात् ।

त्यर्थः ॥ तदेवोपासकानां कार्य्यार्थं द्विहस्तादिसहस्रहस्तपर्य्यंतानारा
यणाद्यो येऽवतारास्तत्तद्रूपीभवत्याह ॥ रामतापिनीयाश्रुतिः ॥ रमं-
तेयोगिनोऽनंते सत्यानन्दे चिदात्मनि ॥ इतिरामपदेनासौपरंब्रह्माभि-
धीयते ॥ १ ॥ चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ॥ उपास-
कानां कार्य्यार्थं ब्रह्मणोरूपकल्पना ॥ २ ॥ रूपस्थानां देवतानां पुंस्त्र्यं
गास्त्रादिकल्पना ॥ द्विचत्वारिषडष्टासांदश द्वादशषोडश ॥ ३ ॥
अष्टादशामी कथिताहस्ताः शंखादिभिर्युताः ॥ सहस्रांतास्तथा तासां
वर्णवाहनकल्पना ॥ ४ ॥ शक्तिसेनाकल्पना च ब्रह्मण्येवं हिपंचधा ॥
इत्येषा ॥ अत्रयत्परं ब्रह्मरामपदेनाभिधीयते तस्यरामपदाभिहितस्य
रामाख्यस्य ब्रह्मणोरूपकल्पनेत्येवमन्वयोद्रष्टव्यः । अनयाश्रुत्यारामा-
ख्यस्य परस्यब्रह्मणोद्विहस्तादिसहस्रहस्तांतहस्तवतः ॥ येभगवद्वि-
ग्रहाः श्रुतिस्मृतिषुश्रूयंतेतेसर्वेऽपि रामाख्यपरब्रह्मणोऽवताराः सं-
तीत्यवगम्यते ॥ तदेवस्फुटयति ॥ यत्परमिति ॥ सर्वेभ्योऽवतारेभ्यः
परमाऽऽधिक्येनस्थितम् ॥ अवताराह्यसंख्याताहरेः सत्वनिधेर्द्विजाः ॥
यथाविदासिनः कुल्याः सरसः स्युःसहस्रशः॥ इतिभागवतपुराणोक्तेः॥
कुल्याः सरसइवावतारेभ्योऽवतारिण आधिक्योपपत्तेः ॥ नित्यंसर्व-
दाविद्यमानम् ॥ सदेवसौम्येदमग्रआसीत् ॥ इतिश्रुत्युक्तम् ॥ नित्यत्वेन
कालपरिच्छेदरहितमित्यर्थः। यदनंतमिति ॥ अंताभावेनदेशकालपरिच्छे-
दरहितत्वमुक्तम् ॥ तेन[1]नैनमूर्द्ध्वं नतिर्य्यंच नमध्येपरिजग्रभत् ॥ नतस्य
प्रतिमास्तियस्यनाममहद्यशः ॥ इति श्रुतेरर्थउक्तोभवति ॥ चिदात्मक-
मिति ॥ रामचन्द्रश्चिदात्मक इतिश्रुत्युक्तस्य ॥ स्वरूपतोगुणतश्चस्व-
प्रकाशज्ञानाकारस्य वस्तुनोनिर्देशः । पुनर्यदेकमिति ॥ स्वेतरेषांसर्वेषां
मुख्यमित्यर्थः ॥ एकेमुख्यान्यकेवलाः॥इत्यनुशासनात्॥ व्यापकं लोके॥

---

टि० (१) कश्चित्पुरुषएनंपरमात्मानमूर्ध्वंतिर्यंचामध्ये न परिजग्र-
भत् नग्रहणं करोति ।

इति ॥ लोके व्यापकं व्याप्याल्लोकाद्बहिरपिस्थितमित्यर्थः ॥ सभूमिं[१]
सर्वतः स्पृत्वात्यतिष्ठद्दशांगुलमितिपुरुषसूक्तात् ॥ भूमीतिलोकोपल-
क्षणम् ॥ तद्रूपमहंचिंतयामि ॥ साक्षात्सद्दर्शनार्थमितिशेषः रूप्यतेनिरु-
प्यते इतिरूपम् ॥ परमतत्वमित्यर्थः ॥ अत्रस्यानामेकंपरं नित्यमनन्तं-
चिदात्मकमेकंव्यापकम् ॥ इत्येषांपदानां परतत्वेपर्य्यवसितत्वात् ॥
यत्तद्विशेषणसहितानां चतेषांनपुंसकलिंगत्वाच्च तद्रूपमितिपदेन
परमतत्वस्याभिधानस्योपपत्तेः ॥ २५ ॥

**विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपंस्वसुखैकहेतुम्॥**
**श्रीरामचंद्रंहरिमादिदेवं परात्परंराममहंभजामि २६**

अथोक्तलक्षणस्य परमतत्वस्य साकारत्वरामाभिधानत्वादिदेव
त्वपरात्परत्वज्ञापनायविशिनष्टि ॥ विज्ञानहेतुमिति ॥ विज्ञानंजीवस्य-
धर्मभूतज्ञानं[२] यत्तद्वैमुख्येन नष्टमासीत्॥ तस्यहेतुम् ॥ सान्मुख्यदाने-
नप्रकाशकमित्यर्थः ॥ प्रज्ञाचतस्मात्प्रसृतापुराणीतिश्रुतेः ॥ तेषांसतत-
युक्तानां भजतांप्रीतिपूर्वकम् ॥ ददामिबुद्धियोगंतंयेनमामुपयांतिते
॥ १ ॥ तेषामेवानुकंपार्थमहमज्ञानजंतमः ॥ नाशयाम्यात्मभा-
वस्थो ज्ञानदीपेनभास्वता ॥ २ ॥ इति भगवद्वचनाच्च ॥ विमलेउज्ज्वले
आयतेआकर्ण अक्षिणीयस्यतमितिपरमतत्वस्य साकारत्वंस्वरूपस्यत

---

टि० (१) सपुरुषः परमात्माभूमिं सर्वतः स्पृत्वासर्वभूमिंव्याप्यश्री
वामनरूपेणआक्रम्यदशांगुलमत्यतिष्ठत् दशांगुलमग्रेअ-
त्यतिष्ठत्।

(२) यत् जीवस्यधर्मभूतज्ञानं तत् तस्य जीवस्य वैमुख्येनविमु-
खस्य भावो वैमुख्यं तेन नष्टमासीत् तस्य ज्ञानस्य
हेतुप्रकाशकम्।

गुणासक्तत्वं च दर्शितम् ॥ प्रज्ञानरूपमिति ॥ प्रशब्देन संकोचविकाशौ निवार्य्येतेतादृशं ज्ञानंचधर्मोयस्य ॥ अथवा प्रशब्दः परिछेदनिवारकः परिछेदरहितं यत् ज्ञानंचित्स्वप्रकाशंतदेवरूपंविग्रहोयस्यतम् ॥ चिन्मयामस्यविग्रहम् ॥ सच्चिदानंदविग्रहइति वक्ष्यमाणात् ॥ ॥ अनेनेंद्रनीलप्रभस्य तद्विग्रहरूपस्यापि प्रज्ञानात्मकत्वेनापरिछिन्नत्वं स्वप्रकाशकत्वं च ज्ञापितंभवति ॥ तद्रूपस्य[१] तद्विग्रहाऽभिन्नत्वात् ॥ ईदृशस्यरूपस्यापि निर्विषयमहर्षिगणानां योगिनां च मोहकत्वेन स्वाश्रयविग्रहस्य परमतत्त्वविग्रहत्वं[२] ज्ञापकत्वाच्च ॥ स्वसुखैकहेतुम् स्वमसाधारणंयत्सुखंसाक्षात्कारलक्षणं तस्यैकहेतुंमुख्यकारणं तत्प्रदमित्यर्थः ॥ अनेनात्मनस्तद्दर्शनाकांक्षावत्वं तस्यभक्तकांक्षापूरकत्वेन स्वदर्शनदायकत्वञ्चज्ञापितन्भवति ॥ नायमात्माप्रवचनेन लभ्यो नमेधयान बहुनाश्रुतेनयमेवैषवृणुते स तेनलभ्यस्तस्यैवआत्माविवृणुते तनुंस्वाम् ॥ इतिकठश्रुतेः ॥ अथवा स्वंसुखंब्रह्मानन्दलक्षणं तस्यैकंमुख्यंहेतुं कारणप्रदमित्यर्थः ॥ अनेनब्रह्मानन्दप्राप्तिकामानां भगवदेकोपायनिष्ठत्वज्ञापितंभवति श्रीराचन्द्रमिति ॥ ॐ योवैरामचन्द्रः सभगवान् यत्परब्रह्मभूर्भुवः स्वस्तस्मै वै नमो नमः ॥ यश्चाखण्डैकरसात्मा यश्चब्रह्मानन्दामृतं यस्तारकं ब्रह्मयोब्रह्माविष्णुरीश्वरो योब्रह्माण्डस्यांतर्बहिर्व्याप्नोति योवासुदेवोयोमहाविष्णुः ॥ इत्यादि

---

टि० (१) तद्रूपस्यतस्यपरमात्मनोरूपस्य स्वरूपभूततत्त्वस्यतद्विग्रहात् तस्यपरमात्मनोविग्रहात् शरीरात् अभिन्नत्वात् नाम ऐक्यत्वाततदुक्तं देहीदेहविभागोनसच्चिदानन्दविग्रहेइति वचनात् रूप्यतेप्रकाशते इतिरूपं रूपदीप्ताविितिधातोः विज्ञानरूपमिति स्तवराजेउक्तं परंतत्वं विशेषेणगृह्यते इतिविग्रहःशरीरं ग्रहग्रहणेइतिधातोः

(२) अपरिछिन्नत्वं स्वप्रकाशकत्वंच ज्ञापितं भवतीतिपूर्वेणान्वयः

तापिनीयचरममन्त्रैर्नारायणादि रूपित्वेन सर्वावतारितया ज्ञापितं हरिम्। अवताराह्यसंख्याताहरेः सत्वनिधेर्द्विजाइत्युक्तेः॥ सर्वावतारूपेणोद्धरतेस्वभक्तानितिहरिः ॥ तदुक्तंपंचरात्रे ॥ रामशरणागतस्तोत्रे ॥ वासुदेवादिमूर्तीनां चतुर्णांकारणंपरम्॥ चतुर्विंशतिमूर्तीनामाश्रयः शरणंमम ॥ सर्वावताररूपेणदर्शनस्पर्शनादिभिः॥ दीनानुद्धरतेयस्तुसरामः शरणंमम॥ २ ॥ इति ॥ तत्ररमन्ते योगिनोऽनंतेसत्यानन्देचिदात्मनि ॥ इतिरामपदेनासौपरब्रह्माभिधीयते॥ १ ॥ इत्युक्त रामपदवाच्यं परब्रह्मतदेव सर्वावताररूपेणचन्द्रवत्स्वभक्ताह्लादकत्वेन चंद्रमित्युच्यते॥ सर्वावतारिस्वभक्ताह्लादकमित्यर्थः ॥ तदेवस्पष्टयति हरिमिति॥ अवताराह्यसंख्याताहरेः सत्वनिधेर्द्विजाः । यथाविदासिनः कुल्यः सरसः स्युः सहस्रशः॥ १॥ इति भागवतपुराणोक्तं हरिम्॥ सर्वावतारिणमित्यर्थः॥ पुनः स्फुटयति॥ आदिदेवमिति॥ त्रिपाद्विभूतौ लीलाविभूतौ च क्रीडापरंद्युतिमंतं कंदर्पवृंदनिर्मथनीयरूपम्॥ अतएव सर्वमोदकरं स्तवनीयं सर्वाराध्यं विजयिनंचेत्यर्थः आदिश्चासौदेवश्चतम्॥ सर्वेभ्यःपूर्वसिद्धंचेतियावत्। पुनरपिस्पष्टयति॥ परात्परतरमिति॥ यस्मात्परंनापरमस्तिकिंचित्॥ यस्मान्नज्यायोनाणीयानस्तिकश्चित्॥ परात्परंयन्महतोमहांतम्॥ इत्येवमादिश्रुतिभिः॥ सर्वपरत्वेनोक्तंरामम्॥ रमंतेयोगिनोऽनंते॥ इतिश्रुत्युक्तं योगीन्द्रचित्तविश्रामस्थानं सच्चिदार्थकरामपदाभिहितं रामाख्यंपरंब्रह्मेत्यर्थः॥ एवंभूतंरामाख्यंपरमंतत्वं परंब्रह्मअहंभजामिध्यायामि॥ साक्षाद्दर्शनार्थमितिशेषः॥ तदाकांक्षांविनातद्दर्शनानुपपत्तेः ॥ २६॥

**कविंपुराणंपुरुषंपुरस्तात्सनातनंयोगिनमीशितारम्।**
**अणोरणीयांसमनंतवीर्य्यंप्राणेश्वरंराममसौददर्श॥**

एवं सद्योदेवप्रसादिनीमंजलिबद्ध्वा तद्दर्शनाभिलाषयापरात्परंरामंध्यायतोदेवर्षेः श्रीरामः साक्षाद्बभूवेत्याह ॥ कविमिति॥ अ-

सीनारदोरामं ददर्शेत्यन्वयः ॥ कीदृशम् ॥ कविम् ॥ सर्वज्ञम् ॥ यः सर्वज्ञः सर्वविदितिश्रुतेः ॥ सर्वज्ञस्याप्यस्यकचित्संमुग्धत्वमिवदृश्यते ॥ तत्खलुनखरकुंतलादिवत्तद्रूपानतिरेक्येवमंतव्यम् ॥ इतरस्य तस्मिन्नसत्वात् ॥ अनुकृतिरूपंतदित्यपरेतस्याभगवत्कृतत्वेनालौकिकत्वात् माधुर्य्यरसपोषकत्वेन साफल्यम् ॥ पुराणमिति ॥ पुराणमपिनवम् ॥ भगवन्नित्यविग्रहस्यपरिणत्यनुपपत्तेः ॥ पुरुषमितिमहतः परमव्यक्तमव्यक्तात्पुरुषःपरः ॥ पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिः ॥१॥ इतिश्रुत्युक्तं परमपुरुषमित्यर्थः पुराणत्वेपरमपुरुषत्वे च हेतुः ॥ पुरस्तादिति ॥ पूर्वमपिस्थितमित्यर्थः ॥ तत्रापिहेतुः ॥ सनातनमिति ॥ यतः सनातनंनित्यमनादिमतः पुरापिस्थितं परमपुरुषंचेति ॥ योगिनम् ॥ योगवंतम् ॥ नित्यपार्षदैर्हनुमदादिभिः ॥ सहनित्यंवर्त्तमानमित्यर्थः ॥ यद्वायोगोऽप्राप्तस्यप्रापणलक्षणस्तद्वंतम् ॥ स्वभक्ताभीष्टकरम् ॥ इत्यनेनरामस्यस्वभक्ताभीष्टस्वदर्शनेच्छापूरकत्वंज्ञापितंभवति ॥ ईशितारम् ॥ तैरपिस्वामितयाऽराध्यमानमित्यर्थः ॥ चिदचिन्नियंतारमितिवा ॥ अणोरणीयांसमिति ॥ अणोरणुपरिमाणादतिसूक्ष्मादपि जीवादेरणीयांसंततोपि सूक्ष्ममित्यर्थः ॥ इतरथातद्व्याप्तिर्नघटेत ॥ अनुवस्तुव्याप्तिर्हिद्विधा ॥तस्यदशदिक्संबंधोहिव्याप्तिः॥ इतिकेचित् । सभूमिंध्सर्वतः स्पृत्वात्यतिष्ठद्दशांगुलम् ॥ इतिपुरुषसूक्तात् ॥ ततोऽप्यतिसौक्ष्म्येणांतःप्रवेशइत्यपरे ॥ अन्यथा ॥ यच्चकिंचिज्जगत्सर्वंदृश्यते श्रूयतेपिवा ॥ अन्तर्वहिश्चतत्सर्वं व्याप्यनारायणः स्थितः ॥ १ ॥ इतिश्रुतिव्याकोपापत्तेः ॥ अनंतवीर्य्यम् ॥ असंख्येयपराक्रमम् ॥ तदुक्तं स्वयमेव॥ सदुष्टोवाप्यदुष्टोवा किमेषरजनीचरः ॥ सूक्ष्ममप्यहितंकर्त्तु

---

टि० (१) इतरस्य अज्ञानकृतसंमुग्धत्वजड़त्वस्यतस्मिन् प्रज्ञात्मकविग्रहे असत्वात्मिथ्याभूतत्वात् ॥ तन्मुग्धत्वमणुकृत्यरूपत्व प्रज्ञात्मकविग्रहस्य सदृशंरूपमितिअपरे आचार्य्यावदंति।

मशक्तः कथंचन ॥ १ ॥ पिशाचान्दानवान्यक्षान्पृथिव्यां येचराक्षसाः॥
अंगुल्यग्रेणतान्हन्यामिच्छन्हरिगणेश्वर ॥ १ ॥ इतिप्राणेश्वरम् । स्व
भक्तानांप्राणनाथंप्राणेभ्योप्यतिप्रियम् ॥ अथवाप्राणनियंतारंप्राणस्त्र-
रूपस्थितिप्रवृतिहेतुमित्यर्थः ॥ एतेनप्राणाधीनस्वरूपस्थितिप्रवृत्तीनां
मनआदीन्द्रियाणामपिस्वरूपस्थितिप्रवृत्योर्हेतुत्वं रामस्योक्तंभवति ॥
अथवा ॥ नवैवाचोनचक्षूंषि न श्रोत्राणिमनांसिच ॥ इत्युच्यंते ॥प्राणा-
एवेत्युच्यंते ॥ तस्मात्प्राणएवैतानिसर्वाणिभवतीतिछांदोग्यश्रुतेः ॥
प्राणशब्देन प्राणसहितानि सर्वाण्यपींद्रियाण्युच्यंते तेषांप्राणशब्दवा-
च्यानां सर्वेषामिंद्रियाणामीश्वरंनियंतारं स्वेच्छयाप्रवर्तकमित्यर्थः ॥
चक्षुषश्चक्षुः श्रोतस्यश्रोत्रमुतप्राणस्यप्राणमित्यादिश्रुतेः॥ राममिति ॥
यदेकंयत्परमित्यादि परमतत्वबोधकैः पंचविंशतिविशेषणैर्विशेषित-
त्वेनरामपदस्यपरात्परतत्वत्वसिद्धेः ॥ रमंतेयोगिनइतिश्रुत्युक्तंसच्चि-
दार्थरामपदाभिहितं रामाख्यंपरंब्रह्म तदेवदाशरथिपुत्रत्वेनात्राविर्भूत
मित्येवंददर्शाऽसौनारदः ॥ सीतयाशोभमानंब्रह्मरामाभिधानमिति ॥
परात्परतरंतत्वंसत्यानंदंचिदात्मकम् ॥ मनसाशिरसानित्यंप्रणमामि
रघूत्तमम् ॥ १ ॥ इत्यग्रे एवनारदोयतोब्रह्मणोरामाभिधानत्वंरघूत्तम-
स्यदशरथपुत्रस्यपरात्परतरतत्त्वंचवक्ष्यति॥ तदेवंयदेकंयत्परमित्या
द्योपनिषत्सारपदबोध्यंपरात्परतत्वं देवर्षिनारदोध्यात्वातदेवध्यातं
तत्वंरामपदवाच्यंसाक्षाद्दृष्ट्वा च सर्वोपनिषत्सारपदवाच्यं रामाख्यं
यत्परब्रह्मपरमंतत्वं तदेवदाशरथित्वेनात्राविर्भूतमितिनिश्चित्य तथै-
वसर्वोपनिषत्सारभूतैः परमतत्वबोधकैः पदैर्दाशरथिरामंतुष्टाव ॥
तत्रादौरामतापिनीयोपनिषदुक्तप्रकारेण तुष्टावेत्यवगम्यते ॥तथाहि॥
रामतापिनीयोपक्रमे ॥ इतिरामस्यरामाख्याभुविस्यादथतत्वतः ॥
रमंतेयोगिनोऽनंतेसत्यानंदेचिदात्मनि ॥ इतिरामपदेनासौपरंब्रह्मा-
भिधीयते ॥ १ ॥ चिन्मयस्याद्वितीयस्यनिष्कलस्याशरीरिणः ॥ उपा-
सकानांकार्यार्थं ब्रह्मणोरूपकल्पना ॥ २ ॥ द्विचत्वारिषडष्टासांदशद्वा-
दशषोडश ॥ अष्टादशामीकथिताहस्ताः शंखादिभिर्युताः ॥ ३ ॥ सह-

स्रांतास्तथा तासां वर्णवाहनकल्पना ॥ शक्तिसेनाकल्पना च ब्रह्मण्येवं हिपंचधा ॥ ४ ॥ कल्पितस्यशरीरस्य तस्य सेनादिकल्पना ॥ इत्येताः श्रुतयोऽवतार्य्यवतारपराः॥आसामर्थः॥ यस्मिन्ननंतेसत्यानन्देचिदात्म- नियोगिनोरमंते स सत्यानंदगुणकोऽपरिच्छिन्नचिदात्मारामः ॥ इति सच्चिदानन्दार्थकेन रामपदेनासौ दाशरथिः परंब्रह्माभिधीयते कथ्यते ॥ १ ॥ यत्परंब्रह्म रामपदेनाभिधीयते तस्यैव रामाख्यस्य चिन्मयस्या- द्वितीयस्य ब्रह्मणोरूपकल्पनोपासकानां कार्य्यार्थम् ॥ २ ॥ रूपस्थाना- मासां देवतानां द्व्यादिसहस्रांता हस्ताः शंखादिभिर्युताः कथिताः श्रुतिभिस्तेसर्वेरामाख्यपरब्रह्मरूपस्थत्वेन रामावताराः ॥ ४ ॥ इत्युप- क्रमश्रुतिभिरुक्तं यत्तदेव तापनीयोपसंहारमन्त्राः सप्तचत्वारिंशत्सं- ख्याकाः प्रकाशयामासुः ॥ ॐ यो वै श्रीरामचन्द्रः स भगवानद्वैत- परमानन्दात्मा यत्परंब्रह्म भूर्भुवः स्वस्तस्मैवैनमोनमः ॥ १ ॥ यथाप्रथम मन्त्रोक्तावाद्यन्तौ तथासर्वमन्त्राद्यन्तौज्ञातव्यौ ॥ यश्चाखण्डैकरसा- त्माभूः ॥ २ ॥ यश्चब्रह्मानन्दामृतोभूः ॥ ३ ॥ यच्च तारकं ब्रह्म ॥ ४ ॥ यो ब्रह्माविष्णुरीश्वरोयः सर्वदेवतात्मा ॥ ५ ॥ ये सर्ववेदाः सांगाः स शाखाः सपुराणाः ॥ ६ ॥ यो जीवात्मा ॥ ७ ॥ यःसर्वभूतान्तरात्मा ॥ ८ ॥ यो देवासुरमनुष्यादिभावात्मा ॥ ९ ॥ येमत्स्यकूर्माद्यवताराः ॥ १० ॥ यश्च प्राणः ॥ ११ ॥ योन्तःकरणचतुष्टयात्मा ॥ १२ ॥ यश्च यमः ॥ १३ ॥ यश्चान्तकः ॥ १४ ॥ यश्च मृत्युः संभवः ॥ १५ ॥ यश्चा- मृतम् ॥ १६ ॥ यानिपञ्चमहाभूतानि ॥ १७ ॥ यः स्थावरजङ्गमात्मा ॥ १८ ॥ ये पञ्चाग्नयः ॥ १९ ॥ याः सप्तव्याहृतयः ॥ २० ॥ याविद्या ॥ २१ ॥ यासरस्वती ॥ २२ ॥ यालक्ष्मीः ॥ २३ ॥ यागौरी ॥ २४ ॥ या जानकी ॥ २५ ॥ यच्चत्रैलोक्यम् ॥ २६ ॥ यश्च सूर्य्यः ॥ २७ ॥ यश्च सोमः ॥ २८ ॥ यानि नक्षत्राणि ॥ २९ ॥ येचनवग्रहाः ॥ ३० ॥ येचाष्टौ लोकपालाः ॥ ३१ ॥ येचाष्टौवसवः ॥ ३२ ॥ येचैकादशरुद्राः ॥ ३३ ॥ यचद्वादशादित्याः ॥ ३४ ॥ यच्च भूतंभव्यं भविष्यत् ॥ ३५ ॥ योब्रह्म ण्डस्यांतर्बहिर्व्याप्नोतिविराट् ॥ ३६ ॥ यो हिरण्यगर्भः ॥ ३७ ॥

या प्रकृतिः ॥ ३८ ॥ यश्चोंकारः ॥ ३९ ॥ याश्चतस्रोऽर्द्धमात्राः ॥ ४०॥ यः परमपुरुषः ॥ ४१ ॥ यश्चमहेश्वरः ॥ ४२ ॥ यश्चमहादेवः ॥ ४३॥ यः ॐनमोभगवतेवासुदेवाय महाविष्णुः ॥ ४४॥ यः परमात्मा ॥ ४५ ॥ योविज्ञानात्मा ॥ ४६ ॥ ॐयोवैश्रीरामचन्द्रःसभगवान् यः सच्चिदानन्दाद्वैतैकरसात्माभूर्भुवः स्वस्तस्मैवैनमोनमः ॥ ४७ ॥ इतितेमन्त्राः ॥ एभिर्मन्त्रैः श्रीरामस्य स्वयंपरब्रह्मत्वंसर्वावतारित्वंस्वेतरसमस्तचिदचिदात्मकत्वमुक्तम् ॥ योदेवासुरमनुष्यादि भावात्मा यः स्थावर जङ्गमात्मा यच्चभूतंभव्यंभविष्यदिति मन्त्रत्रयेणानुक्तमपि संग्रहीतं न किंचिदवशिष्टम् ॥ तेन सर्ववेदोपनिषद्गूढार्थं प्रकाशयामासुरिमेमंत्रा इत्यवगमात् ॥ पुनः कुतः सर्वोपनिषद्गूढार्थं प्रकाशयामासुरित्यवगम्येदितिचेदुच्यते ॥ श्रीरामेणैवं शिक्षितोब्रह्मापरमेश्वरं तुष्टावेतिराम तापिनीयश्रुतेर्ब्रह्मणः श्रीरामशिष्यत्वावगमात् ॥ तद्वेदगुह्योपनिषत्सुगूढं तद्ब्रह्मावेदतेब्रह्मयोनिं येपूर्वंदेवाऋषयश्च तद्विदुस्तेतन्मया अमृता वैवभूवुरिति श्रुत्यन्तरेण वेदगुह्योपनिषत्सुगूढंतत्वं ब्रह्मयोनिं वेद योनिं ब्रह्मावेदतेजानातीत्यवगमाच्च । श्रीरामेणशिक्षितोब्रह्माशेषवेदोपनिषद्गूढं शास्त्रयोनिं परमतत्वं श्रीरामंज्ञात्वा सर्ववेदोपनिषद् गूढार्थ प्रकाशकैरेभिर्मंत्रैः श्रीरामंतुष्टाव यस्मात्तस्मादिमेमन्त्राः सर्व वेद गुह्योपनिषद्गूढार्थ प्रकाशका इत्यवगमाच्च ॥ प्रायस्तापिनीय श्रुतिमन्त्राणामुपबृंहणभूतोऽयंरामस्तवराज इत्यवगमाच्च ॥ तत्समानार्थकः पदैस्तदर्थ प्रकाशनत्वं तदुपबृंहणत्वम् ॥ इत्युपबृंहणलक्षणम् ॥ कुतस्तेषांश्रुतिमंत्राणामयंस्तवराजउपबृंहणभूत- इत्यवगम्यते ॥ इतिचेत् ॥ तत्राह ॥ एषांश्रुतिमंत्राणां वेदोपनिषद्गूढार्थप्रकाशकत्वात् ॥ कथितंब्रह्मपुत्रेणवेदानांसारमुत्तममितिस्तवराजस्यवेदसारत्ववक्ष्यमाणात् ॥ प्रदर्शितश्रुतिमंत्राणामर्थस्यप्रकाशकत्वाच्च ॥ तथाहि ॥ चिन्मयस्याद्वितीयस्येत्याद्याः[1] श्रुतयः संतितत्र-

---

टि० (१) तदेवदर्शयति।

स्यस्यचिन्मयपदस्यार्थं सत्यंचिदानंदमयस्वयमिति प्रकाशयिष्यति नारदः ॥ अद्वितीयस्येतिश्रुत्युक्तमर्थम् ॥ अद्वैतंतमसः परमितिवक्ष्यति निष्कलस्येतिश्रुत्युक्तम् ॥ निष्कलमप्रपंचमिति वक्ष्यति ॥ अशरीरिण इतिश्रुत्युक्तम् ॥ नित्यानंदनिराकारमितिवक्ष्यति॥ रामपदाभिहितस्य रामाख्यब्रह्मणइतिश्रुत्युक्तम्॥ स्मृतहृदयविमानंब्रह्मरामाभिधानमिति वक्ष्यति ॥ ब्रह्मणोरूपकल्पनारूपस्थानमिति श्रुत्युक्तमर्थम् ॥ मत्स्यकूर्मवराहादिरूपधारिणमिति वक्ष्यति ॥ द्विचःवारीत्यादि च ॥ तत्र कूर्मनृसिंहादयोद्विभुजानारायणंजगन्नाथमित्यनंतरं वक्ष्यमाणोनारायणश्चतुर्भुजः शंखादियुतश्च ॥ सहस्रहस्तवान् ॥ सहस्रशीर्षपुरुषःसहस्राक्षः सहस्रपादितिश्रुत्युक्तः पुरुषोऽस्ति ॥ सहस्रशीर्षादिमतः सहस्रहस्तवत्त्वोपपत्तेः ॥ भागवतेऽस्यहर्य्यवतारत्वं क्षीराब्धिशायित्वं सहस्रबाहुत्वंच स्फुटमुक्तंभवति ॥ अवताराह्यसंख्याताहरेः सत्वनिधेर्द्विजाः ॥ जगृहेपौरुषंरुपमादौलोकसिसृक्षया॥ यस्यांभसिशयानस्य योगनिद्रामुपेयुषः ॥ नाभिह्रदांबुजादासीद्ब्रह्मालोकपितामहः ॥ १॥ पश्यत्यदोरूपमदभ्रचक्षुषा सहस्रबाहूरुभुजाननाद्भुतम् ॥ इति ॥ एवमन्येऽपिषडष्टभुजादयः शास्त्रतोज्ञेयाः ॥ यच्च ॥ ॐ योवै श्रीरामचन्द्रः सभगवान् यत्परब्रह्मेतिप्रथममंत्रेणोक्तं रामस्यस्वयंपरब्रह्मत्वम् ॥ तत् ॥ शांतं सर्वगतं सूक्ष्मं परब्रह्मसनातनम् । राजीवलोचनंरामंप्रणमामिजगत्पतिम् ॥१॥ इति । रामःसत्यंपरब्रह्मेति च वक्ष्यति ॥ यत्तारकंब्रह्मेतिमंत्रोक्तम् । तत् त्वमेवतारकंब्रह्मेतिवक्ष्यति । योब्रह्माविष्णुरीश्वरः यः सर्वदेवात्मा । येचनवब्रह्मा येचसर्ववेदाः सांगाः सशाखाः सपुराणाः योदेवासुरमनुष्यादिभावात्मायेचाष्टौलोकपालाः येचाष्टौवसवः यच्चभूतंभव्यं भविष्यत् येचैकादशरुद्राः यानिनक्षत्राणियश्च स्थावरजंगमात्माइत्येवमादिमंत्राणामर्थम् । ब्रह्माविष्णुश्चरुद्रश्चदेवेन्द्रोदेवतास्तथा ॥ इत्यारभ्य ॥ सर्वेपांत्वंपरब्रह्म त्वन्मयंसर्वमेवहि ॥ इत्यंतेनप्रकाशयिष्यति। तत्र। योजीवात्मायाप्रकृतिः यः स्थावरजंगमात्मेत्यादिमंत्रेषु । जीवप्रकृतिवाचकानां श्रीरामपदसामानाधिकरण्य

विवर्तं चिन्मात्रं सर्वेश्वरपदवाच्यं सर्वोपादानं निमित्तंस्यादिति कल्पयंति ॥ तदनेन निरस्तं नारदेन ॥ नहिव्यापकस्य निरुपमस्य संभवेत् प्रतिविंवम् ॥ न च तादृशस्याभासःक्वापिदृश्यते ॥ नन्वाकाश वत्सर्वगतः ॥ इतिश्रुतेः ॥ सर्वव्यापकस्यारूपवतोप्याकाशस्याभासोदृश्यते जलादाविति चेन्न ॥ यस्तमसि तिष्ठन्यस्यतमः शरीरमिति श्रुतेः ॥ तमः कार्य्यभूत प्रधानकार्य्यस्याकाशस्यापि परमात्म शरीरत्वेन तद्व्याप्यत्वात् ॥ तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुरितिश्रुतेः ॥ आकाशस्यापि जन्यत्वात् घटादिवद्रूपवत्वोपपत्तेः ॥ नीलंनभ इतिप्रतीतेः ॥ जलादौतदा भासस्यापि नीलरूपत्व दर्शनाच्च ॥ निरवद्यम् ॥ निर्दोषम् ॥ यतोनिरंजनम् ॥ निर्गतमंजनमज्ञानं यस्मात्तम् ॥ अज्ञानलेपरहितम् ॥ निरवद्यं निरंजनमिति श्रुत्युक्तम् ॥ नित्यानंदम् ॥ नित्याआनंदादयो गुणायस्यतम् ॥ पृथक्सिद्ध्यनर्हानंदादिगुणगणमित्यर्थः ॥ निराकारम् ॥ स्वरूपस्य व्यापकत्वेन चतुर्भुजाद्याकारान्निर्गतम् ॥ आकारइह विराड्रूप मुच्यते ॥ तस्माद्वैलक्षण्यम् ॥ किलतन्निर्गतेः ॥ अत्रस्वरूपस्याकाराद्वैलक्षण्य मेवततो निर्गतिपदेनोच्यते ॥ अथवा प्राकृताकारान्निर्गतम् ॥ दिव्यमंगल विग्रहमिति ॥ ब्रह्मानंदैकविग्रह इतिश्रुतेः ॥ सच्चिदानंद विग्रह इत्यग्रेवक्ष्यमाणाच्च ॥ अद्वैतम् ॥ चिदचिद्विशिष्ट रूपात्तस्मादन्यस्याभावात् (तस्माद्ब्रह्मणः अन्यस्यपदार्थस्याभावात् ) स्वसदृशद्वितीयस्याभावाच्च ॥ न तत्समश्चाभ्यधिकश्च दृश्यते ॥ नतस्यप्रतिमास्ति यस्यनाममहद्यशः ॥ चिन्मयस्याद्वितीयस्य ब्रह्मणोरूप कल्पना ॥ इत्येवमादि श्रुत्युक्तम् ॥ स्वसमाधिकरहितमित्यर्थः ॥ तमसःपरम् ॥ विष्ण्वनेक सहस्रनाम तुल्यसर्ववेद सर्वमंत्र जपलब्धफल कोटिगुणाधिक पुण्यप्रद सच्चिदानंद ब्रह्मसाक्षाद्वाचक स्वयं सच्चिदानंद ब्रह्मात्मकज्योतिः स्वरूपरामपदवाच्य व्यतिरिक्तस्य विशेष्य स्वरूपत्वानुपपत्तेः ॥ अनेनैव द्विभुजादिमद्विशेष्य स्वरूपेण नित्यविभूतिस्थमित्यर्थः ॥ स्थूलमष्ट भुजंप्रोक्तं सूक्ष्मंचैव चतुर्भुजम् ॥ परंतु-

द्विभुजंप्रोक्तं तस्मादेतत्त्रयंयजेत् ॥ १ ॥ इतिपंचरात्रेपि द्विभुजस्यैव पररूपस्मरणात् ॥ पुनस्तत्रैव ॥ द्विहस्तमेकवक्त्रं च शुद्धस्फटिक सन्निभम् ॥ १ ॥ मरीचि मण्डले संस्थं बाणाद्यायुध लांछितम् ॥ २ ॥ इति गा[illegible]त्री प्रतिपादितस्यापि द्विभुजत्वोक्तेश्च ॥ सूर्य्यमंडल मध्यस्थं रामंसीता समन्वितम् ॥ इत्यग्रे द्विभुजरामस्यैव सूर्य्यमंडल मध्यस्थत्ववचनेन गायत्र्यभिहितत्वंवक्ष्यमाणाच्च ॥ कस्याप्यन्यस्य गायत्रीवाच्यत्वानुपपत्तेश्च ॥ ४८ ॥

## परात्परतरंतत्वं सत्यानंदं चिदात्मकम् ।
## मनसा शिरसानित्यं प्रणमामिरघूत्तमम् ॥४९॥

परात्परमिति ॥ प्रधानादि कारणत्वात्तमस्तत्वं परमुच्यते ॥ तस्मात्परं नित्यमुक्त जीवबृंदम् ॥ तदतिक्रमणात्तस्मादपि परम् ॥ तस्याप्युपास्यं श्रीरामतत्वंपरमपुरुषार्थभूतमिति संप्रदायः किंच परे ब्रह्मादयस्तेभ्योऽपि परेमत्स्यकूर्म वाराहादयो भगवदवतारास्ते परात्परास्तेभ्योपिपरं रामाख्यं परब्रह्म परात्परतरं मत्स्यकूर्मादिरूप धारित्वेन तत्तद्रूपित्वेन सर्वावतारित्वादिति ॥ यत्तुकेचित्परव्यूह विभवांतर्य्यामर्यर्चा भेदेन पंचविध परस्वरूपाणां मध्येरामशब्द वाच्यादन्यस्य परस्वरूपत्व मुपपादयंति तन्नोपपद्यते ॥ किंबहुविवादेन परंतत्वंह्येकमेव नान्यत्किंचित्तत्समाभ्यधिकमस्ति ॥ एकमेवाद्वितीयंब्रह्म ॥ चिन्मयस्याद्वितीयस्यब्रह्मणः ॥ न तत्समश्चाभधिकश्च दृश्यते ॥ न तस्यप्रतिमास्ति यस्यनाम महद्यशः ॥ इत्येवमादि श्रुतिभ्यः ॥ तस्यनामान्यनंतानि ॥ तत्रब्रह्म परब्रह्मविष्णु महाविष्णवादीनि परतत्व व्यापकत्व गुणद्वारा तत्स्वरूपेपर्य्यवस्य तद्वाचकानिभवंति ॥ नारायण वासुदेव हर्य्यादीनितु ॥ क्षीराब्धि निवासित्व सर्वभूतनिवासित्व स्वभक्त दुःखहरत्व रूपतत्कर्म गुणद्वारा तस्मिन्पर्य्यवस्य तद्वाचकानिभवंति ॥ कृष्णनामापि सदानंद गुणद्वारा तद्वाचकंभवति

(सच्चआनंदश्च सदानन्दौ तौ च गुणौ सदानंदगुणौतयोर्द्वारा) ॥ एव मन्यान्यपि यानि भगवन्नामानि तानि सर्वाण्यपि तद्गुणद्वारा तत्क-र्मद्वारा तद्वाचकानि भवंत्यतस्तानिगौणानीत्युच्यंते भीष्मादिभिः ॥ यानि नामानि गौणानि विख्यातानि महात्मनः ॥ ऋषिभिः परिगी-तानि तानिवक्ष्यामि भूतये ॥ १ ॥ इत्येवं विष्णुसहस्रनामादौ भाग-वतेपि ॥ यस्यावतार गुणकर्म विडंबनानि नामानियेऽसुविगमे विवशा-गृणंति ॥ इत्युक्तमतःकानिचित्तद्गुणकारितानि भक्तवत्सल करुणा-निधीत्यादीनि कानिचित्तत्कर्मकारितानिरावणारिकंसारीत्यादीनि तानिसर्वाणि यतोगुणकर्म कृतान्यतो गौणानीत्युच्यंते ॥ यतोव्याप-कत्वादयो भगवद्गुणाः संति न तु तत्स्वरूपभूताः ॥ स्वरूपंतु ॥ तस्यापरिछिन्न चिदेकरसंख्यापकत्व सत्यत्वानंदत्वादि गुणाश्रय भूतम् ॥ रामचन्द्रश्चिदात्मकः ॥ इत्येवमादि श्रुतिभ्यस्तस्य चिदेकर-सस्य सत्यानंद तत्स्वरूप समानाकार गुणसहितस्य साक्षाद्वाचक मेकमेवरामेतिनामास्ति नत्वन्यत् ॥ तथैवाह ॥ रमंतेयोगिनोऽनंते सत्यानंदे चिदात्मनि ॥ इतिरामपदेनासौ परब्रह्माभिधीयते ॥ १ ॥ इतितापनीया श्रुतिः ॥ न केवलं सत्यानंदगुणकचित्स्वरूपस्य वाचक मिदंरामनाम ॥ किंतु तत्स्वरूप भूतमपीत्याह तापनीया-श्रुतिः ॥ ब्रह्मात्मकाः सच्चिदानंदाख्या इत्युपासितव्यम् ॥ इत्येषा ॥ ननुजड़ानां नामवर्णानां कथं ब्रह्मात्मकत्वम् ॥ ब्रह्मणः ॥ सत्यानन्द चिदात्मकत्वात् ॥ सत्यंज्ञानमनंतंब्रह्मेति श्रुतेः ॥ इत्या-शंक्याह ॥ सच्चिदानन्दाख्याइति ॥ सच्चिदानन्दा इत्याख्या संज्ञा-येषां ते सच्चिदानन्दाख्याः ॥ ब्रह्मवद्राम नाम वर्णा अपि सच्चिदा-नन्द पदवाच्याः ॥ अतो ब्रह्मात्मकाः ब्रह्मस्वरूपभूताइत्यर्थः ॥ इममर्थं स्फुटयामास तापिनीया श्रुतिः ॥ स्वभूर्ज्योतिर्मयोनंत रूपीस्वेनैव-भासते ॥ जीवत्वेनेदमोंयस्य ॥ इत्येषा ॥ स्वप्रकाश ज्योतिर्मयो राम-शब्द इत्यर्थः ॥ तथैव रामोपनिषच्छ्रुतिरप्याह ॥ स्वप्रकाशः परंज्यो तिः स्वानुभूत्येक चिन्मयः ॥ तदेव रामचन्द्रस्य मनोराद्यक्षरस्मृतम्

॥ १ ॥ इत्येग ॥ तथाच ॥ यथा स्वाश्रित गुणेभ्यस्तदाश्रयद्रव्यस्य बह्वाधिक्यमवगम्यते ॥ यथाचस्वाश्रितेभ्यो व्यापकत्वोपायत्वोपेय-त्वादि गुणकर्मभ्यस्तदाश्रयस्यापरिछिन्न चिद्द्रव्यस्य कोटिगुणाधि-क्यमुपपद्यते ॥ अवगम्यते च । तथैव चिदात्मक परब्रह्म गुणकर्म-वाचकेभ्यस्तद्द्वापरे ब्रह्मणि पर्य्यवसितेभ्यस्तन्नामांतरेभ्यस्तदपरि-छिन्नचित्स्वरूप साक्षाद्वाचकस्य तत्स्वरूपभूतस्य चरामनाम्नः कोटि गुणाधिक्यमुपपद्यते ॥ इत्यभिप्रायेणैव वेदविदोमुनीश्वर व्यासाद-यो जगदीश्वराश्च शिवादयो रामनाम्नो विष्ण्वनेक सहस्र नाम तुल्यत्वं तदधिकत्वं चसर्व वेद सर्व मंत्र जपफल कोटि गुणाधिक्क पुण्यप्रदत्वं चोक्तवंतः ॥ तत्कोटि गुणाधिक पुण्यप्रदत्व वचनेन ॥ तादृङ्नाम सहस्रैस्तु रामनाम समंमतम् ॥ इति सहस्रैरितिबहुवच-नांतस्य सहस्रपदस्य तत्कोटि नामबोधकत्वं च ज्ञापित वंतस्तएव-व्यासादयः ॥ विष्णोरेकैक नामैव सर्ववेदाधिकंमतम् ॥ तादृङ् नाम-सहस्रैस्तु रामनामसमंमतम् ॥ १ ॥ जपतः सर्व वेदांश्च सर्वमंत्रांश्च-पार्वति ॥ तस्मात्कोटि गुणंपुण्यं रामनाम्नैवलभ्यते ॥ २ ॥ विष्णो-र्नाम्नांसहस्राणांतुल्य एषमहामनुः ॥ अनंताभगवन्मंत्रानानेनतु समाः कृताः ॥ ३ ॥ शांतः प्रसन्नो वरदोह्यक्रोधो भक्तवत्सलः । अनेनसदृशो-मंत्रो जगत्स्वपि न विद्यते ॥ ४ ॥ इत्येवमादिभिः ॥ तथाचात्र सर्व वेद सर्वमंत्र जपफलात्कोटिगुणाधिक पुण्यप्रदत्वेनोक्तस्य राम-नाम्नोमहद्यशस्त्वावगमात् ॥ न तस्यप्रतिमास्ति यस्य नाममहद्यशः ॥ इति श्रुत्युक्तोऽप्रतिमोऽनुपमो रामपद वाच्योस्तीति निश्चयात् ॥ नतत्समश्चाभ्यधिकश्चदृश्यते ॥ चिन्मयस्याद्वितीयस्य ब्रह्मणोरूप-कल्पना ॥ इत्येवमादि श्रुतिभिस्तदन्यस्यतत्समाभ्यधिक निषेधत्वा-व गमाच्चेतयनुपमत्वेन स्वसमाभ्यधिक रहितस्यैव रामपदवाच्यस्य परस्वरूपत्वं त्रिपादविभूति स्वामित्वं चोपपद्यते ॥ नान्यस्येत्यभि-प्रायेण नारदेनापि सर्वज्ञेनाद्वैतमित्यनेन तस्य स्वसमाभ्यधिक रहित-त्वं तमसः परमित्यनेन परविभूतिस्वामित्वं चज्ञापयित्वा ॥ परात्पर-

तरंतत्वमित्यनेन तत्परात्पर तत्वत्वं स्फुटीकृतम् ॥ नारायणं जगन्ना-
थमित्यादि विशेषणैस्तस्यैव सर्वावतारित्वंच ज्ञापितम् ॥ अग्रेपि ॥
त्वमक्षरं परंज्योतिस्त्वमेवपुरुषोत्तमः ॥ त्वमेव तारकं ब्रह्मत्वत्तोऽन्य-
न्नैव किंचनेति रामस्यैवाक्षरादिशब्द वाच्यत्वं दृढ़ीकृत्यतदन्यस्या-
क्षरादि शब्द वाच्यत्वं निषेत्स्यति ( सएवनारद इत्युत्तरेणान्वयः )
त्वतोऽन्यन्नैव किंचनेतित्वत्तोऽन्यत्किंचनाक्षरादि शब्द वाच्यं नास्ती-
त्यर्थः ॥ सएव नारदस्तथाव्यासोपि ॥ सत्यं सत्यं पुनः सत्यं सत्य
मेतदिहोच्यते ॥ रामः सत्यं परब्रह्म रामात्किंचिन्न विद्यते ॥ १ ॥ इति
त्रिः शपथं कृत्वा रामस्यपरब्रह्मत्वंदृढ़ीकृत्यतदन्यस्यपरब्रह्मत्वं निषे-
त्स्यति ॥ रामात्किंचिन्न विद्यते इतिरामादन्यत्किंचिद्वस्तुपरब्रह्म वा-
च्यं नविद्यते नास्तीत्यर्थः ॥ पुनः सव्यासः ॥ कथितंब्रह्मपुत्रेण वेदा-
नांसारमुत्तमम् । इतिस्तवराजस्य सर्ववेदोत्तमसारत्व वचनेन तत्प्र-
तिपादितस्य श्रीरामस्य सर्ववेदसार भूत निरामयनिराभास निरवद्य-
निरंजन नित्यानन्द निराकाराद्वैततमः परादिपदैक वेद्यत्वंस्फुटीकरि-
ष्यति ( तमः परादिपदैरेकवेद्यत्वं तमःपरादिपदैकवेद्यत्वम् ) ॥
तस्मात्परब्रह्मपरतत्वाक्षरपरज्योतिः पुरुषोत्तमादिभिः कारण वाक्य-
गतैः शब्दैस्तत्रतत्रवेद स्मृतिपुराणेतिहासादिष्वेकःसच्चिदानन्दार्थ-
करामशब्दवाच्य एवाभिधीयते सएवैकस्तत्तद्रूप धारित्वेनावतारी-
त्युच्यते ॥ सर्वावताररूपेणदर्शनस्पर्शनादिभिः ॥ दीनानुद्धरतेयस्तु
सरामः शरणंमम् ॥ १ ॥ इतिपञ्चरात्रादिषुसएवब्रह्माद्युपासकप्रार्थन-
यात्तत्तत्कार्य्यार्थंभुव्यवतीर्य्य तत्तत्कार्य्याणि करोतीतिभुव्यवतरण-
मात्रेणावतार शब्द वाच्यो भवति ॥ अवतरतीत्यवतारः ॥ इतिनिरु-
क्तेः ॥ अवतरणादवतारः ॥ इतिलक्षणाच्च ॥ वस्तुतोऽवतार्य्यवतार-
योर्भेदानुपपत्तेः ॥ तत्रावतारेषु मध्येयत्र बहुगुण प्राकट्यं दृश्यते
सपूर्णावतार इत्युच्यते ॥ यत्राल्पगुणप्राकट्यमुपलभ्यते सकलाव-
तारः ॥ अंशावतारः ॥ इत्युच्यते ऋषिभिर्बहुगुणाल्पगुण प्राकट्य
मेवतत्पूर्णावतारत्व कलांशावतारत्व कथनेहेतुः ॥ नतुपर तत्वं सम्पू-

र्णाविर्भावत्वं तदल्पांशाविर्भावत्वं चाखंडा परिच्छिन्नचिदेकरस पर-ब्रह्मस्वरूपस्य केनचिद्वक्तुमशक्यत्वात् ॥ स्वयमेव विभेदे परिच्छिन्न-त्वापत्तेश्च न कथंचिदवतारेषुतःस्वरूपभेद कृतोऽल्पाधिक भेद उप-पद्यते ॥ किंतु गुणाल्पाधिक प्राकट्य कृतस्तदल्पाधिक भावः ॥ अतो-भगवतः सर्वेऽवताराः स्वरूपतो गुणैश्च पूर्णाः ॥ तएववहुगुण प्राक-ट्य मात्रेणपूर्णावतारा इत्युच्यंते ॥ अल्प गुण प्राकट्येन कलावतारा अंशावतारा इत्युच्यंते ॥ वस्तुतस्तु सर्वेपूर्णाइति पूर्वापर श्रुतिस्मृ-त्यादि वाक्य विचारतः ॥ सर्वे नित्याः शाश्वताश्च देहास्तस्य महा-त्मनः ॥ हानोपादानरहिता नैवप्रकृतिजाः क्वचित् ॥ १ ॥ परमा-नंद संदोहा ज्ञानमात्राश्चसर्वतः । सर्वे सर्व गुणैवपूर्णाः सर्वदोषविवर्जिताः ॥ २ ॥ इतिमहावाराह वाक्यतश्चावगम्यते अस्यवाक्यस्य ॥ मणिर्यथा विभागेन नीलपीतादिभिर्युतः ॥ रूपभेद मवाप्नोति ध्यानभेदात्तथाच्युतः ॥ १ ॥ इत्यनेन पंचरात्र वाक्येनैकवाक्यता कारणात् ॥ सर्वेषां भगवद्विग्रहाणां परविग्रहे श्री-रामस्वरूपे भानमात्रत्वं भानत्वस्य च नित्यत्वमुपपद्यते ॥ तत्रापि ॥ उपासकानां कार्य्यार्थं ब्रह्मणोरूप कल्पना ॥ रूपस्थानां देवतानां पुं-स्त्र्यंगास्त्रादि कल्पना ॥ १ ॥ इतिश्रुति सहायकस्य पंचरात्र वचनस्य ततो महावाराह वाक्यतः ॥ प्रवलत्वोपपत्तेस्तत्रतत्रावतारावसरे तत्तत्कार्य्यार्थं तानितानि रूपाणिस्वस्थान्येव प्रकटीकरोतिपरमेश्वरः श्रीरामः ॥ यथामणिः स्वस्यरूपं शुक्लमपि नीलपीतादि रूपेण दर्शयति तद्वत् ॥ मूलकारणतत्वस्य द्विनिष्ठत्वा नुपपत्त्या वहु-विग्रहाणां नित्यत्वानुपपत्तेः ॥ तद्वहुविग्रहाणां सनातनत्वस्य तदन्यतर निष्ठमूलकारणत्व निश्चयवाधकत्वाच्च ( तत्तस्मात् श्रीरामात् अन्यतरे अन्येस्मिन् विष्णुवासुदेव हरिनारायण कृष्णादौनिष्ठस्थित मूलकारणत्वं निश्चयवाधकत्वं ;तस्मात् ) वहुपरमेश्वरत्वानुपपत्तेश्च ॥ सर्वदावहु विग्रहाणां प्रयोजनाभावा-च्च ॥ एकमेवाद्वितीयं व्रह्मनेहनानास्ति किंचन ॥ न तत्समश्चाभ्य-

धिकश्च दृश्यते ॥ इत्येवमादि श्रुतिविरोधाच्च ॥ कुतउक्तश्रुतिविरोध इतिचेदुच्यते ॥ सर्वेषां विग्रहाणां सनातनानां परस्परं समत्वेन (मत्स्य कूर्मादिभगवद्विग्रहाणां सनातनानां परस्परं समत्वेन मत्स्य कूर्मस्य वाराहादयः समाः कूर्मस्य वाराहनृसिंहादयः समाएवं सर्वेऽपि परस्परसमा भवंतितेनसमत्वेन श्रुतिविरोधापत्तेरेकमेवपरमतत्वमितिपूर्वेणान्वयः ) ॥ नतत्समश्चाभ्यधिकश्चदृश्यते इतितत्समत्व निषेधक श्रुतेर्बाधापत्तेस्तस्माच्छ्रुतिस्मृति पुराणादि वाक्यानां तत्पूर्वापरपरस्पर विरोध परिहारद्वारैकवाक्यतोपपादनेन श्रुतिस्मृत्यादिषुपरब्रह्म शब्देनोक्तमेकमेवपरमतत्वम् ॥ तत्तत्कार्य्यार्थंतत्तद्रूपाविष्कारित्वेनावतारीत्युच्यते ॥ भुव्यवतरणादवतार इत्युच्यते ॥ तेन तेन गुणनाम्ना कर्मनाम्नाचाख्याते॥ क्वचित्स्व स्वरूपनाम्नाचाख्यायते श्रुतिस्मृत्यादिभिर्महर्षिभिः ॥ सएवमुमुक्षुभिः प्राप्यते चेति समस्त श्रुतिस्मृति पुराणेतिहास संहिता तंत्रादीनां तत्तदृषीणां च निर्बाधः सिद्धान्तो दर्शितोमया ॥ अतस्तत्तद्विग्रहेषुन्यूनाधिक दृष्टिंपरिहृत्य यस्मिन्कस्मिन्विग्रहे स्वाभीष्टे मनोनिवेश्य सर्वभावेनभजनीयः सः ॥ नतुकदाचिद्विस्मरणीयोमुमुक्षुभिः ॥ यथालाभेन निर्वाहश्च कर्तव्यः ॥ न तुद्रव्याद्यर्ज्जनार्थमितस्ततो भ्रमितव्यम् ॥ द्रव्याद्यर्ज्जनार्थं मितस्ततोभ्रमतांमुमुक्षुत्वानुपपत्तेस्ततोभगवत्प्राप्त्यनुपपत्तेश्चेति दिक् ॥ परात्पर तरत्वेहेतुं तन्नित्यगुण सहितं तत्स्वरूपमेवेति ज्ञापयति ॥ सत्यानंदंचिदात्मकमिति ॥ सत्योनित्य सिद्धः ॥ न तु विषय निषेवया कदाचिदुपजात आनंदोयस्यतम् ॥ नित्यानंद गुणकमित्यर्थः ॥ उपलक्षणमेतद्गुणांतराणाम् ॥ अन्यथा तत्तद्गुण प्रयोजनकाले तत्तद्गुणाऽभावेन तत्तत्कार्य्यासिद्धानंदभंगेन तन्नित्यानंदत्वबाधात् ॥ चिदात्मकम् ॥ चिदेकस्वरूपम् ॥ स्वस्मैस्वयं प्रकाशमान स्वरूपमिति परमपुरुषार्थत्वं व्यक्तम् ॥ अत्रपरब्रह्म रामविषयकं सत्यानंदं चिदात्मक मिति वचनमन्यथा नुपपद्यमानं सविग्रहस्य श्रीरामस्य सत्यानंद चिदात्मकत्वमुपपादयति ॥ अन्यथासत्या-

नंद चिदात्मकेषु जीवेष्वतिव्याप्तिः स्यात् ॥ वक्ष्यतिचाग्रे श्रीरामस्य सच्चिदानंद विग्रहत्वम् ॥ विरराम महातेजाः सच्चिदानंद विग्रहः ॥ इतिएवंभूतंरघूत्तमंरत्नसिंहासने समासीनम् ॥ सिंहासने समासीनं नित्यव्रतमकल्मषमिति पूर्वं रघूत्तमस्य सिंहासन समासीनत्वोक्तेः ॥ मनसावचसा नित्यं प्रणमामीति ॥ वचसेत्युपलक्षणम् ( पराणांमंगा- नामुपलक्षणम् ) ॥ दोर्भ्यां पद्भ्यांचजानुभ्यामुरसा शिरसादृशा ॥ मनसावचसाचैव प्रणामोऽष्टांगईरितः ॥ १ ॥ इत्युक्तानांदोरादिषड्ङ्गा- नाम् ॥ तत्रमनः पूर्वं वागुत्तर रूपमिति श्रुतेः ॥ मन सातंपरात्परतरं तत्वंज्ञात्वा तथैवचिंतयन्तः ॥ प्रणमन् वच आदिभिर्बहिर्नित्यं प्रण- मामि ॥ नित्यं न कदाचिदित्यनेन श्रीरामस्यस्वोपास्य देवत्वं स्फुटी कृतंनारदेन । अत्रस्तवराजे उपक्रमे मध्येऽतेचैश्वर्य्य माधुर्य्य परो- भय विध विशेषणैः श्रीरामस्य विशेषितत्व दर्शनात् ॥ अत्रापि ॥ परात्परतरं तत्वं सत्यानन्दं चिदात्मकम् ॥ इतितस्यप रमैश्वर्य्यं कंठतउक्त्वा ॥ रघूत्तम मितिपदेन तस्य परममाधुर्य्यं- ज्ञापयित्वा नित्य प्रणामस्योक्त त्वात् ॥ माधुर्य्य विशिष्टै- श्वर्य्यावस्थः परमैश्वर्य्य विशिष्ट माधुर्य्यावस्थश्च श्रीरामः ॥ रत्नमण्डप मध्यगकल्पतरु मूलस्थ रत्नसिंहासन मध्यस्थः । श्रीजानकी सहितोरघूत्तमः ॥ योगीन्द्रैर्नारदाद्यैरहर्निशंस्तूयमानः वि- श्वामित्र वशिष्ठादिभिः सनकादिभिश्च सेवितश्च ॥ नारदव्याससूता- दीनां वेदविदग्रे सुराणां सर्वेषामुपास्यः ॥ इतितत्तद्वचनैरेवाव गम्यते ॥ तत्र व्यासेनोपक्रमे सिंहासनस्थस्य रघूत्तमस्य ध्यानमु- क्तम् माधुर्य्यावस्थस्य नारदाद्यैरहर्निशं तस्यस्तूयमानत्वं विश्वामित्र वशिष्ठादि सनकादिभिश्च तत्परि सेवितत्वं च ॥ पुनः ॥ एवं संचिं- तयेद्विष्णुं यज्ज्योतिरमलं शिवम् ॥ इति परमैश्वर्य्यत्वेन परमतत्वेन तच्चिंतनमुक्तम् ॥ मध्येतुनारदेन परात्परं तत्वं प्रणमामिरघूत्तमम् ॥ इतितथैवोक्तम् ॥ अंतेतु श्रीसूतो वेदव्यास कृपापात्रः ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामंडपे मध्येपुष्पक मासनेमणिमये वीरासनेसंस्थि

तम् ॥ अग्रेवाचयति प्रभंजनसुते तत्वं च सद्भिः परं व्याख्यातं भरतादिभिः परिवृतं रामंभजेश्यामलम् ॥१॥ इति हैममहामण्डप मध्यग सुरद्रुममूलस्थमणिमय सिंहासनस्थस्य वैदेही सहितस्यरामस्य विश्वामित्रपराशरादिमुनिभिः संस्तूयमानस्यात एवविश्वामित्र पराशराद्युपास्यभूतस्यरामंभजेइत्यनेन स्वोपास्यत्वंवक्ष्यतितस्मात्स्वतंत्र[1]प्रमाण सर्ववेदयथार्थविन्नारदव्यासादि प्रणीतस्मृतिपुराणेतिहाससंहिताद्युपदिष्टमार्गानुगामित्वेन तच्छिष्यभूतानामस्मत्पर्य्यंतानामस्मदुत्तरकाल भाविनांचसर्वेषांसनकादि नारदव्यासविश्वामित्र वशिष्ठपराशरसूतादीन् गुरुत्वेनमन्यमानानां सर्वेषामुक्तप्रकारकोरामः सीतासहितएव सर्वदोपास्योध्येयः पूज्योजप्तव्यश्चतत्तारकाख्यः षडक्षरोमंत्रस्तद्रामेति नाम च सीतानामसहितंनित्यं सर्वदाजप्तव्यमिति सर्वलोकहितार्थाय नारदेनोक्तस्य सर्ववेदसारभूतस्यस्तवराजस्यसारार्थोऽस्माभिः स्फुटीकृतः ॥ ४९ ॥

## सूर्य्यमण्डलमध्यस्थं रामंसीतासमन्वितम् ।
## नमामिपुण्डरीकाक्षममेयं गुरुतत्परम् ॥ ५० ॥

तदेवंनारदोभगवान्सर्वलोकानां हितार्थायस्वाभीष्टं ज्ञापयित्वा वाक्यंसमाप्योत्तर वाक्यैरुक्तार्थमेवद्रढयामास ॥ सूर्य्यमण्डलमध्यस्थमित्यादि भिस्तत्रसूतेनस्फुटमेववैदेही सहितस्यरामस्य स्वोपास्यत्वमुक्तम् ॥ रामंभजेइत्यनेन विश्वामित्रपराशरादि मुनिभिःसंस्तू-

टि० (१) स्वतंत्रेप्रमाणंयेषांते स्वतंत्रप्रमाणाः सर्वेवेदाः तान्यथार्थंवेत्तीति यथार्थवित् नारदव्यासादिभिः तैःप्रणीतानिकथितानि स्मृतिपुराणेतिहास संहितादीनितैः संहितादिभिः उपदिष्टमार्गाणामनुगामित्वेन तेषांनारदादीनां शिष्यभूतानाम् ॥

यमानमित्यनेन तस्यविश्वामित्रपराशरादीनामप्युपास्यत्वंज्ञापितम् ॥ व्यासेनवालावस्थस्य रामस्यध्यानमुक्तम् ॥ सीतासहितत्वंतुतस्यनोक्तम् ॥ अविवाहितस्य तस्यवैदेहीसहितत्वकथनानुपपत्तेः ॥ तथापि व्यासस्यापिसीतासहितएवरामउपास्यः ॥ तच्छिष्यस्यसूतस्य वैदेहीसहितरामस्योपासकत्वात् ॥ तद्गुरोर्नारदस्यापि सीतासमन्वित रामस्योपासकत्वाच्च ॥ तत्रसूतेनवैदेहीसहितं रामंभजेद्इति स्वमुखेनस्वस्यतथात्वमुक्तम् ( तथात्वंसीतासहित श्रीरामस्योपासकत्वमुक्तम् ) नारदोपिस्वमुखेनैवतथैवोक्तवान् ॥ सूर्य्यमण्डलमध्यस्थंरामंसीतासमन्वितं ॥ नमामीति ॥ तत्र ॥ सूर्य्यमण्डलमध्यस्थमित्यनेन सीतायुतस्यरामस्यगायत्री प्रतिपादितत्व बोधनेनपरमैश्वर्य्यत्वंजगतः कर्मसुप्रवर्त्तकत्वंचातोजगज्जीवनहेतुत्वं सर्वजीवबुद्धिप्रेरकत्वादिकंचज्ञापितंभवति ॥ सीतासमन्वितम् ॥ सीतयाश्रीजानक्यादेव्या सम्यक् नित्यं अनुनिरंतरंइतंयुक्तंनमामि ॥ इत्यनेनस्वस्ययुग्मोपासकत्वमुक्तम् ॥ पुण्डरीकाक्षम् ॥ कमलदलवत्प्रसन्नोज्ज्वलाकर्णांतदीर्घनेत्रम् ॥ इत्यनेनस्वस्यतन्नेत्राद्यवयव सौंदर्य्यादिरसिकत्वम् ॥ अमेयम् मातुंज्ञातुमशक्यम् ॥ कात्स्न्येनज्ञानाविषयम् ॥ इत्यनेनरामस्यरूप संहननलक्ष्मीसौकुमार्य्यसुवेषता गुणलीलादीनामियत्ताराहित्यद्योतनेन कात्स्न्येन वाङ्मनसोरगम्यत्वमुक्तम् ॥ एवंभूतपरमैश्वर्य्यस्यातिदुर्लभस्यापि परममाधुर्य्यदर्शनेनाति सुलभत्वंज्ञापयति ॥ गुरुतत्परमिति ॥ वशिष्ठादिपूज्यवर्गभक्तिपरायणम् ॥ एवंभूतंरामंयोगिचित्तविश्रामस्थानं वशिष्ठादीनां स्वाभिरामरूपादिदर्शनादिनासाक्षादानंदप्रदम् ॥ अमेयत्वेनपरविभूतिस्वामिनम् ॥ सूर्य्यमण्डलमध्यस्थत्वेन गुरुतत्परत्वेन चलीलाविभूतिस्वामिनम् ॥ एतत्स्वामित्वेनैवसूर्य्योदयद्वारा जीवानामैहिकामुष्मिक कर्मसुप्रवर्त्तकम् ॥ गायत्रीवाच्यत्वेन सर्वधीप्रेरकम् ॥ गुरुतत्परत्वेनलोकानां धर्मशिक्षकमित्यर्थः ॥ नित्यंनमामि ॥ नित्यमिति पदस्यनित्यं प्रणमामीतिपूर्ववाक्यस्थस्यात्रानुकर्षः ॥ एवमुत्तरोत्तरत्रापि नमामिपदेननित्यपदस्य सवंधोज्ञेयः ॥ अन्यथापूर्वा-

प्रवाक्ययानां परस्परविरुद्धापत्तिःस्यात्कुतः॥ एकस्य स्वामिनः उद्देशेनैककर्तृकनित्यप्रणामकदाचित्कप्रणामवचनयोः परस्परंविरोधित्वात् ॥ ५०॥

नमोस्तुवासुदेवाय ज्योतिषांपतयेनमः ॥
नमोस्तुरामदेवाय जगदानंदरूपिणे ॥ ५१ ॥

नमोस्त्विवति ॥ पुनस्तत्पारमैश्वर्य्यंस्फुटयति ॥ वासुदेवायज्योतिषांपतयेइत्याभ्याम् ॥ वासुदेवायसर्वभूतनिवासिने सर्वभूताधारायच ॥ नमोस्तु । ज्योतिषांपतये सूर्य्यादीनांनियंत्रेतेषां प्रकाशकायवा ॥ नतत्रसूर्योभातिनचंद्रतारकं नेमाविद्युतोभांतिकुतोऽयमग्निः। तमेवभांतमनुभातिसर्वं तस्यभासासर्वमिदंविभाति ॥ इतिश्रुत्युक्तायनमः ॥ पुनस्तन्माधुर्य्यंस्फुटयति ॥ रामदेवायेति ॥ रूपौदार्य्यगुणैः पुंसांदृष्टिचित्तापहारकम् ॥ तथा ॥ रामस्यलोकरामस्येति ॥ रामोलोकाभिरामोयम् ॥ इति ॥ मनांसिनोहरत्येष सर्वेषांनरचन्द्रमाः ॥ इत्येवमादि महर्षिवचनेभ्यः ॥ रामनाम भुविख्यातमभिरामेण वापुनः ॥ इतितापनीयश्रुतेः ॥ स्वरूपौदार्य्यगुणैः सर्वान् रमयतीति रामइतिनिरुक्तेश्च ॥ स्मितपूर्वाभि भाषणेक्षणादि गुणविशिष्टाय सुन्दर वपुषे ॥ देवाय अशोकवाटिकादिषु क्रीडापराय ॥ अतएव जगदानंदरूपिणे ॥ जगदानंदं रूपंविद्यते यस्यसतस्मै ॥ प्रशस्ते अत्यंतसंयोगे धामतुवर्थः॥ ऐश्वर्य्यपक्षेतु ॥ रामाय ॥ योगिचित्त रमणस्थान भूताय । देवाय ॥ विचित्र क्रीडापराय स्तवनीयाय ॥ सर्वाराध्याय ॥ जगदानंदरूपिणे जगदानंदहेतवे ॥ एषएवानंदयतीति श्रुत्युक्तायेत्यर्थः ॥५१॥

---

टि० (१) एकः स्वामी श्रीरामचन्द्रः तस्य उद्देशेन निमित्तेन एकःकर्त्तृकः नारदः तस्य कदाचित्कः नित्यप्रणामवचनः कदाचित्कः प्रणामवचनः तयोः नित्यसर्व कालसूचक प्रणाम एकवार सूचकवचनयोः परस्परविरोधात्विरुद्धापत्तिः स्यात् इतिपूर्वेणान्वयः ।

# नमोवेदांतनिष्ठाय योगिनेब्रह्मवादिने ॥
# मायामयनिरस्ताय प्रपन्नजनसेविने ॥ ५२ ॥

इदानींसर्ववेदांतवेद्यत्वेन सर्ववेदप्रतिपादितं परंतत्वं रामएवे-त्याह ॥ नमोवेदांतनिष्ठायेति ॥ वेदांतेषु निष्ठाप्रतिपाद्यतयास्थितिर्य-स्यतस्मैवेदांत निष्ठाय ॥ वेदांतेच प्रतिष्ठितइति श्रुत्युक्तायेत्यर्थः ॥ योगिने ॥ भक्तमैत्रीरसरसिकायेत्यर्थः ॥ ब्रह्मवादिने ॥ सांगस्य स शिर स्कस्य ब्रह्मणोवेदस्यप्रवर्त्तकायेत्यर्थः ॥ मायेति ॥ निरस्तमायामयाय॥ आहिताग्न्यादि गणपाठान्निष्ठांतस्य पूर्वप्रयोगानियमः ॥ प्रपन्नेति ॥ उपायत्वमुपेयत्वमीश्वरस्यैवयद्भवेत् ॥ शरणापत्तिरित्युक्ताशास्त्र मानाद्विवेकिभिः ॥ १ ॥ स्वापराधोक्तिपूर्वं यदात्मसात्वस्यप्रार्थनम्॥ स्वरूपंशरणापत्तेरित्युक्तंसात्वतेखलु ॥ २ ॥ साधनादिष्वनुष्ठानसा-मर्थ्यविषयश्चयः ॥ कार्त्तृत्वाद्यनहंकार आकिंचन्यंतदुच्यते ॥ ३ ॥ भगवद्व्यति रिक्तायाह्युपायाख्या गतिर्नसा ॥ यथान्यफलसंबंधरूपा-गतिविहीनता ॥ ४ ॥ इत्यनन्यगतिस्तत्रप्रोक्ताशास्त्रार्थदर्शिभिः ॥४॥ आनुकूल्यस्यसंकल्पः प्रातिकूल्यस्यवर्ज्जनम्॥रक्षिष्यतीतिविश्वासोगो-प्तृत्ववर्णनं तथा ॥ ५ ॥ आत्मनिक्षेप कार्पण्यंषड्विधाशरणागतिः ॥ ६ ॥ इत्यादिभ्यः यस्येश्वरैकनिष्ठमुपायत्वमुपेयत्वं च सशरणागत ॥ ममोपाय उपेयश्च परमेश्वरोरामएवनान्यः कर्मज्ञानादिरुपायः ॥ नदे-वतांतरमुपेयइति व्यवसायात्मिकाबुद्धिः शरणापत्तिः शरणागतिरु-क्ताभवति ॥ १ ॥ स्वापराधोक्तिपूर्वमिति ॥ स्वापराधोक्ति पूर्वमात्म सात्वस्यभोगवन्ममात्मसात्कुरु आत्माधीनंकुरु॥ अंगीकुर्वित्यर्थइत्येवं यत्प्रार्थनंतदेवशरणापत्तेः शरणागतेः स्वरूपंभवति ॥ यःकश्चिद्भग-वत्प्राप्तेरुपायोभगवानेवनान्यः कर्मज्ञानादिरिति व्यवसायवान् स्वापराधकथनपूर्वंहे भगवन्नकिंचनोऽगतिश्चाहमतो ममत्वत्प्राप्ते रुपायस्त्वमेवभवेत्येवंप्रार्थयति सशरणागतइतिप्रपन्न इतिपदेनोच्यते

तद्यथोक्तप्रकारिका प्रार्थना शरणागतिपदेनोच्यते ॥ इत्थमेवोक्तंपूर्वाचार्यैः ॥ अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः ॥ त्वमेवोपायभूतोमे भवेतिप्रार्थनामतिः ॥ १ ॥ इतीदृशीभगवंतंप्रतियाप्रार्थनाभगवानेव ममस्वप्राप्तेरुपायो नान्यइतीदृशः स्वबुद्धेर्दृढ व्यवसायश्च यःसएवप्रपत्तिरित्युच्यते ॥ २ ॥ साधनादिष्विति ॥ साधनादीनांयदनुष्ठानं तद्विषयकोयः कर्तृत्वाद्यहंकारः ॥ अहंकर्ता ॥ मदीयंकर्ममदीयंतत्फलंचेतीदृशोयोऽहंकारस्तत्परित्यागआकिंचन्यमित्युच्यते।भगवानेवस्वशरीरभूतेन स्वशेषेणमयास्वशरीरभूतैः स्वकीयैः सर्वैरिंद्रियैः स्वप्राप्त्यर्थं कर्मकारयत्यतः सएवकर्त्तातदीयं चकर्मतस्यैवचफलंभविष्यतीत्येषाबुद्धिराकिंचनाइत्युच्यते ॥ एषएव साधुकर्मकारयतियमूर्द्धं निनीषति ॥ एषएवासाधुकर्मकारयति यमधोनिनीषतीत्येषाश्रुतिः ॥ जानामि धर्मंनचमेप्रवृत्ति र्जानामि पापंनचमेनिवृत्तिः । केनापिदेवेनहृदिस्थितेनयथानियुक्तोस्मि तथा करोमि ॥ १ ॥ इत्येवमाद्याःस्मृतयश्च ॥ फलंतुप्रयोक्तरीतिव्याससूत्रंचोक्तार्थे प्रमाणमस्ति ॥ ३ ॥ भगवद्व्यतिरिक्तेति ॥ भगवद्व्यतिरिक्तायाउपायाख्यागतिः साभगवत्प्राप्तेः स्वस्वरूपानुरूपागतिर्नभगवद्व्यतिरिक्ता येभगवत्प्राप्त्यर्थंतयाभगवता ऋषिभिश्च कर्मज्ञानादयश्चोपाया उक्ताशास्त्रेषु ॥ तेसर्वेनममस्वरूपानुरूपास्तत्प्राप्तेरुपायाइति ॥ किंतु भगवानेवममस्वप्राप्तेः स्वरूपानुरूपउपायः ॥ इत्येषयोबुद्धेर्दृढ व्यवसायस्तदनुरूपादृढास्थितिश्च ॥ तथेति ॥ यानिभगवत्प्राप्तिव्यतिरिक्तान्यर्थधर्मकाममोक्षरूपाणि फलानितत्संबंधरूपायागतिस्तद्विहीनता ॥ भगवानेवस्वप्राप्तेरुपायोनान्य इत्युक्ता भगवदेकोपायतया स्थितिर्योक्तासापि भगवत्प्राप्ति व्यतिरिक्त फलांतर शून्येत्यर्थः ॥ भगवानेव ममस्वप्राप्तेरुपाय उपेयश्च सएव ॥नान्यः कश्चिन्ममतत्प्राप्तेः स्वरूपानुरूप उपायः स्वस्वरूपानुरूपं फलंचेत्येषाया दृढव्यवसायात्मिका बुद्धिस्तदनुरूपादृढा स्थितिश्च यासैवानन्यगति शब्दवाच्याभवति नान्येत्यर्थः ॥ तथैव आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ॥ रक्षिष्य-

तीति विश्वासो गोप्तृत्व वर्णनंतथा ॥ आत्मनिःक्षेपकार्पण्यंषड्विधा शरणागतिः ॥ १ ॥ इतिषड्विधेयं शरणागतिः पंचरात्रे उक्ता । तत्रानुकूल्यमिति । श्रुतिस्मृती ममैवाज्ञायस्तामुल्लंघ्य वर्तते ॥ आज्ञाच्छेदी ममद्रोही मद्भक्तोपिनवैष्णवः ॥ १ ॥ इतिस्मृतेः ॥ भगवदाज्ञाभूत श्रुतिस्मृत्युक्तस्वाधिकारानुरूपधर्म कर्मानुसरणं भगवदनुकूलं भवति ॥ तद्विपरीताचरणं तत्प्रतिकूलं भवति ॥ तत्रैवंसति ॥ भगवदनन्यभक्तप्रपन्नमधिकृत्य तत्स्वरूपानुरूपं श्रुतिस्मृतिभिर्यदुक्तं सर्वधर्मपरित्यागपूर्वकं कायवाङ्मनोभिर्भगवदेक भजनं फलबुद्ध्या तत्कैंकर्यं तदेव भगवत्प्रत्यानुकूल्यशब्देनोच्यते ॥ तद्विपरीतं च भगवद्भजनव्यतिरिक्तं सर्वंसर्वधर्मान्परित्यज्येति प्रपत्त्यधिकारिणः शरणागतस्य परित्याज्यतयोक्तं तत्प्रपत्ति प्रातिकूल्येनात्र प्रातिकूल्यशब्देनोच्यते ॥ तस्यवर्जनं सर्वात्मतां हरेर्ज्ञात्वा सर्वं च भगवद्वपुः ।। प्राणिमात्रानुकूल्यस्याचारोंऽगः प्रथमस्त्वयं पूर्वोक्ताद्विपरीतायेहिंसामत्सरतादयः तत्त्यागः प्रतिकूलस्य वर्ज्जनश्च द्वितीयक इत्युक्तं तु प्राणिमात्रानुकूला चरणं आनुकूल्यं हिंसामत्सरादि तत्प्रतिकूल वर्जनं च सर्वेषां मुमुक्षूणां साधारणोधर्मोऽतोनप्रपन्नस्यासाधारणोधर्म इत्यतोनोक्तोऽत्रमामवश्यंरक्षिष्यति भगवानिति यो विश्वासोऽध्यवसायोनिश्चयः स प्रपत्तेस्तृतीयोंऽगः । गोप्तृत्ववर्णनमिति । दासोस्मिशेषभूतोस्मितवैवशरणंगतः । पराश्रितोऽहंदीनोऽहं पाहिमांकरुणाकर ॥ १ ॥ इत्येवंयत्स्वरक्षणार्थं याचनंप्रार्थनं तत्प्रपत्तेश्चतुर्थोंगः ॥ कार्पण्यमिति उपायानाम सिद्धाचापापानांप्राप्तिःस्वतः कर्तृत्वविषयेगर्वहानिः कार्पण्यमीरितम् ॥ १ ॥ इत्यभियुक्तेनोक्तम् । अनुष्ठितानामुपायानां साधनानामऽसिद्ध्या । पापानांविघ्नानां स्वतःप्राप्तिश्चकर्तृत्वविषये गर्वहानिः । मयापराधालयेनानुष्ठितं किंचिदपिनसिद्ध्यति प्रत्युत विघ्नाभवंतीत्यनुसंधानतयामनसोग्लानिर्हर्षक्षयो दैन्यमितियावत् । तत्कार्पण्यमीरितं कथितं शास्त्रदर्शिभिरित्यर्थः । तदिदंदैन्यं गोप्तृत्ववर्णनस्य स्वरक्षायाचनस्यागंज्ञेयम् । प्रपत्तिवाक्येषु दीनशब्दपू-

र्वक याचनपदस्यश्रवणात् । बद्धांजलिपुटंदीनं याचतंशरणागतम् ॥ इतिवाल्मीक्युक्तकण्डुवाक्ये । दासोऽस्मिशेषभूतोऽस्मितवैवशरणंगतः। पराश्रितोऽहं दीनोऽहं पाहिमांकरुणाकर ॥ १ ॥ इतिपंचरात्रोक्तवाक्ये च दीनपद पूर्वक याचनश्रवणात् । आत्मनिक्षेपः अंगित्वादेषुप्रपत्त्यं-गेषु मुख्यंप्रकीर्तितस्तज्ञैः । तमिममात्मनिक्षेपंदाक्षिणात्याः अर्वाची-नाःआचार्य्याः स्वार्वाचीनाचार्य्यकृतैः श्लोकैः । अहंमद्रक्षणभरोमद्र-क्षणफलंतथा ॥ नममश्रीपतेरेवेत्यात्मानं निःक्षिपेद्बुधः ॥ १ ॥ न्यस्या-म्यकिंचनः श्रीमन्ननुकूलोऽन्यवर्जितः । विश्वासप्रार्थनापूर्वमात्मरक्षा-भरंत्वयि । स्वामिन् स्वशेषं स्ववशंस्वभरत्वेन निर्भरम् । स्वदत्तसु-धियास्वार्थं स्वस्मिन्न्यस्यसिमांस्वयम् ॥ ३ ॥ श्रीमन्नभीष्टवरदत्वा महंशरणंगतः ॥ एतद्देहावसानेमां त्वत्पादंप्रापयस्वयम् ॥ ४ ॥ त्वच्छे पत्वेस्थिरमतिं त्वत्प्राप्त्येकप्रयोजनम् । निषिद्धकाम्यरहितं कुरुमां नित्यकिंकरम् ॥ ५ ॥ देवीभूषणहेत्यादिजुष्टस्यभगवंस्तव । नित्यंनिर-पराधेषु कैंकर्येषुनियुङ्क्ष्वमाम् ॥ ६ ॥ मांमदीयं च निखिलचेतनाचेत-नात्मकम् ॥ स्वकैंकर्य्योपकरणं वरदस्वीकुरुस्वयम् ॥ ७ ॥ तदेकर-क्ष्यस्य ममत्वमेव करुणाकर । नप्रवर्त्तयपापानि प्रवृत्तानिनिवर्तय॥८। श्रीमन्नियतपंचांगमद्रक्षणभरार्पणम् । अचीकरः स्वयंस्वस्मिन्नतोऽह-मिहनिर्भरः ॥ ९ ॥ इत्येतैः स्वशिष्यान् प्रपत्तिंकारयंति । श्रीमन्नियत-सेति । नियतानि स्थितानि । अकिंचन आनुकूल्यसंकल्प प्राति-कूल्यवर्जन विश्वास । प्रार्थनारूपाणि । पंचांगानि यस्मिन् समद्र-क्षणभरार्पणः तं मद्रक्षणभरार्पणं स्वयंस्वस्मिन् अचीकरः कारितवान् ॥ ९ ॥ श्रीरामानंदानुजायिनस्तु । स्वामिन् ते शेषभूतोऽहं तेभोग्यो-रक्ष्यएवच ॥ अकिंचनोऽनन्योपायस्तव कैंकर्य्यं कभोग्यकः ॥ १ ॥ अ-गतिश्चानुकूल्योऽहं प्रातिकूल्येनवर्जितः । रक्षिष्यतीतिविश्वासो-स्वरक्षाप्रार्थनायुतः ॥ २ ॥ कृपणोऽहंदयासिंधो सर्वपापकरस्तथा स्वंचस्वीयंचयत्किंचित्त्वयिन्यस्यामिस्वीकुरु ॥ ३ ॥ न्यस्याम्यकिंचनः श्रीमन्नात्मरक्षाभरंत्वयि ॥ मेत्वत्प्राप्तेरुपायस्त्वं कृपयाभवराघव ॥४।

एतच्चराचरंसर्वं यच्चयावच्च श्रूयते। सर्वमस्ति त्वदीयंहिश्रुतिभिश्चाव-गम्यते॥ ५॥ नतादृशंदृढंज्ञानं मयिस्वामिन् प्रतिष्ठितम्। त्वंतुसर्वं विजानासि सर्ववस्तुममेति च॥ ६॥ संसारसागरेभूमन्तस्मादहंतु निमज्जितम्॥ पश्यसित्वंसमर्थः सन्कारणंकिंवदप्रभो॥७॥ चिदचिदा-त्मकं सर्वंमदीयंसत्यमस्तिवै॥ जीवोप्यऽसौमदीयश्चह्यभिमानाच्चि-मज्जते॥ ८॥ यावत्सत्त्वाभिमानोऽस्यतावत्संसारसागरे॥ निमज्जतेऽ-भिमानात्तेह्युद्धरिष्यामिचेद्वद॥ ६॥ सत्यमहंमदीयं च सर्वमन्यत्तवा-स्तिवै॥ तथातदभिमानोमेहेतुस्तवनियोजने॥ १०॥ अहंमदीयंचेत्ये-षयोऽभिमानोदुरत्ययः॥ त्वयिन्यस्यामि तंस्वामिन्त्वदीयंतंहिस्वी-कुरु॥ १॥ निर्हेतुकृपयासर्वंस्वीकृत्य करुणानिधे॥ अहंममाभिमानंमे-निखिलंछिन्धिमूलतः॥ १२॥ यदिनास्त्यानुकूल्यादिर्मयिस्वामिन्यथा-र्थतः॥ वद्धांजलिपुटंदीनं रक्षमांशरणागतम्॥ १३॥ यथाहंचमदीयंच नमेरामस्यतत्त्वतः॥भातिमेहृदयेसम्यक् तथाकुरुदयानिधे॥ १४॥ त्वन्माययामलीमसंहृदयंनिर्मलंकुरु॥ येनाहंसंविजानामित्वां त्वदीयं-चतत्वतः॥ १५॥ तवत्कृपादृष्टिमात्रेण तद्धिसर्वंभविष्यति॥ नवैप-रिश्रमः कश्चित्तवतत्रदयानिधे॥ १६॥ प्रार्थयामिमहादीनोदीनोद्धर-कृपानिधे॥ एतद्देहावसानेमांस्वंप्रापयदयाकर॥ १७॥ स्वदत्तज्ञान-दीपेन नाशयाज्ञानजंतमः। स्वतत्वज्ञानपूर्वंमांस्वार्थं स्वंप्रापयस्व-यम्॥ १८॥ यानिसंचितपापानि तानिनाशयमेप्रभो॥ अकृत्येषुप्रवृ-त्तिमेवारयबुद्धिप्रेरक॥ १६॥ यथानिर्मुच्यपापेभ्यस्त्वत्प्राप्तियोग्यता-भवेत्॥ मयिस्वामिन्हरेरामतथात्वं मांस्वयंकुरु॥ २०॥ नमेपापवि-निर्मोकेनापित्वत्प्राप्तिसाधने॥ शक्तिस्तत्रसमर्थस्त्वं स्वप्राप्तिसाध-नंभव॥ २१॥ स्वाग्रेमांपतितंदृष्ट्वा श्रुत्वाचप्रार्थनामिमाम्॥ अङ्गीच-कार श्रीरामस्तदप्यस्नेहनिर्भरः॥ २२॥ इत्येतैः श्लोकैस्तेरामानंदा-नुयायिन आचार्याः स्वशिष्यान्प्रपत्तिंकारयंति॥ वाल्मीकीयेऽपि शरणागतिरुक्ताश्रीमुखेन॥ तत्रादौसभायांमध्येनमेदोषवत्वंत्यागे-हेतुः॥ नमेगुणवत्वंग्राह्येहेतुः॥ अपितु॥ राघवंशरणंगतः॥ इतिवि-

भीषणेनोक्तं त्वां शरणंगतोऽस्मीत्येतावद्वचनमेवेति सुग्रीवहनुमदादी-
स्प्रतिप्रतिज्ञायोक्तम् ॥ मित्रभावेनसंप्राप्तंनत्यजेयंकथंचन ॥ दोषोयद्य-
पि तस्यस्यात सतामेतदगर्हितम् ॥ १ ॥ मित्रभावोविश्वासः ॥ वि-
श्वासनीयो मित्रविश्वासवत्वमित्रत्वमितितल्लक्षणात् ॥ विश्वासो
ममायमपकारंनकरिष्यति ॥ अपितूपकारमवेतिदृढनिश्चयः सएव-
विश्वासइत्युच्यते ॥ ममायमवश्यंरक्षिष्यतीति दृढविश्वासेनसंप्रा-
प्तम् ॥ दृढविश्वासंविनाशत्रोः शत्रुशरणागमनत्वानुपपत्तेः ॥ संस-
म्यक् ॥ वद्धांजलिपुटंदीनंयाचतंशरणागतम् ॥ इतिकण्डूक्तप्रकारेणप्रा-
प्तम् ॥ करिष्यामियथार्थंतुकण्डोर्वचनमुत्तमम् ॥ इतितथाप्रतिज्ञायाः
करिष्यमाणत्वात् ॥ दोषोयद्यपितस्यस्यादितिरावण सदृशदोषवंत-
मपीत्यर्थः ॥ आनयैनंहरिश्रेष्ठदत्तमस्याभयंमया ॥ विभीषणो वासुग्रीवो
यदिवारावणःस्वयम् ॥ १ ॥ इतितस्यैवसत्यवाक्तिनः सत्यप्रतिज्ञस्य-
वचनात् ॥ रावणःस्वभार्य्याहर्त्तापीत्यर्थः ॥ कपोतभार्य्याहर्तृव्याध-
शरणागत रक्षणोदाहरणेनास्यैवोक्तार्थस्यदृढीकरणाच्च ॥ नत्यजेयं-
कथंचन ॥ कथंचन स्वप्राणनाशपर्य्यंतानिष्ठप्राप्तेपीत्यर्थः ॥ आर्तोवा-
यदिवादृप्तः परेषांशरणंगतः ॥ अरिःप्राणान्परित्यज्य रक्षितव्यःकृता-
त्मना ॥ १ ॥ इतितस्यैववचनात् ॥ तदेवमयंरामोऽवश्यंमांरक्षिष्यतीति
दृढविश्वासवान् राघवंशरणंगतोस्मीतिवचनवान्यः शत्रुरपिराघव-
स्यशरणागतइति ॥ तत्र राघवंशरणंगतः ॥ इतिवाचिकीप्रपत्तिरुक्ता ।
मित्रभावेनेतिमानसी ॥ संप्राप्तमित्यनेनकायकी ॥ शरीरेणस्वस्था-
नात् ॥ राघवनिवासभूमिमागतत्वात् ॥ अत्रवक्ष्यमाणस्यप्रपन्नायेति-
पदस्यार्थः ॥ मित्रभावेनसंप्राप्तमित्यनेनोक्तोभवति ॥ तवास्मीति-
चयाचतेइत्यस्यार्थः ॥ राघवंशरणंगतोस्मीत्यनेनोक्तः ॥ अत्रकथंच-
नापि नत्यजेयमितितत्राभयंददामीति चोभयत्रशरणागतिफलश्रवणात्
सत्यप्रतिज्ञस्य सत्यवादिनोरामस्यैक शरणागतिपराणां सर्वेषांवा-
क्यानामेक वाक्यतायोग्याच्च ॥ मित्रभावेनसंप्राप्तमित्यस्य सकृदेव-
प्रपन्नायेत्यनेनैकवाक्यतोपपत्तेः ॥ तदेवंस्वशरणागतिहेतुभूतमर्थमुक्त

शरणागतोऽस्मीतिप्रार्थनं च संक्षेपेणोक्तम् ॥ अथो-
द्दिष्टवासलक्षणस्यशरणागतेर्धर्मत्वं उदाहरणेनद्रढयति श्रूयतेहिकपोतेनेत्यादिना ॥
कार्थं कपोतव्याधाद्युदाहरणेनद्रढयति श्रूयतेहि कपोतेनशत्रुः शरणमागतः ॥ पूजितश्चयथान्यायं स्वैश्चमां-
श्रूयतेहि कपोतेनशत्रुःशरणमागतः ॥ पूजितश्चयथान्यायंस्वैश्चमां-
सैर्निमंत्रितः ॥ १ ॥ कपोतेन तिर्यग्योनिनाशास्त्रानधिकारिणा स्वभा-
र्याहर्तृत्वाच्छत्रुर्व्याधः शरणंकपोतनिवासस्थानम् ॥ आगतइत्यत्र-
स्वनिवास भूम्यागमनमात्रमेवशरणागतित्वेहेतुरुक्तोभवति ॥ सक-
पोतःशरण्यंधर्मंरक्षितवानित्याह ॥ पूजितश्चेतिस्वैश्चमांसैर्निमंत्रितः॥
स्वप्राणत्यागपूर्वकं स्वकीयमांसैस्तंनिमंत्र्यतद्दुःखमपाकृत्य स्वशरण्य-
धर्मोरक्षितइत्यर्थः ॥ १ ॥ सहितंप्रतिजग्राहभार्याहर्तारमागतम् ॥
कपोतोवानरश्रेष्ठकिंपुनर्मद्विधोजनः ॥ २ ॥ सहिकपोतस्तिर्यग्योनि-
त्वेन शास्त्रानधिकारतयाविधिनिषेधाऽगोचरोपिभार्याहर्तारमपि
शत्रुं व्याधंप्रतिजग्राह ॥ स्वशरणागतत्वेनगृहीतवान् ॥ मद्विधोमत्स-
दृशः शास्त्राधिकारी धर्मिष्ठाग्रगण्यः स्वचरित्रेणधर्मप्रवर्तकः ॥ चक्रव-
र्तिनरेन्द्रपुत्रत्वेन सर्वविधसमर्थश्च ॥ यदिव्याधसदृशंस्वभार्याह-
र्तारंरावणं स्वशरणमागतंसंतंस्वप्राणानपिपरित्यज्यरक्षेत्तर्हिकिंव-
क्तव्यंनकिमपि ॥ कपोतात्सहस्रगुणाधिक्येन स्वशत्रोरपिशरणागतस्य
रक्षणंममोचितमित्यर्थः ॥ तच्चतत्कोटिगुणाधिक्येनतद्रक्षणं तुतन्मुक्ति
दानेनोपपद्यते॥ अतस्तद्दानमेववक्ष्यति दत्तमस्याभयं मयायदिवा
रावणःस्वयमिति ॥ २ ॥ ऋषेःकंड्वस्यपुत्रेण कण्डुनापरमर्षिणा ॥
शृणुगाथांपुरागीतां धर्मिष्ठांसत्यवादिनीम् ॥ ३ ॥ स्फुटार्थम् ॥ गा-
थामाह ॥ वद्धांजलिपुटंदीनं याचंतंशरणागतम् ॥ नहन्यादानृशंस्या-
र्थमपिशत्रुं परंतप॥ ४ ॥ वद्धांजलीति ॥ अञ्जलिः परमामुद्रासद्योदेव
प्रसादनी ॥ इतिस्मृतेः ॥ वद्धांजलित्वमात्रमेवशरण्यप्रसादनेऽलं त-
द[1]भावेदीनत्वमेवतादृशं तदभावेयाचनमेवतादृशंतस्याप्यभावे शर-

टि० (१)तद्भावेवद्धांजलित्वस्याभावेदीनत्वमेवतादृशंशरण्यप्रसादने-
ऽलम् तद्भावेदीनत्वस्याप्यभावेयाचनत्वमेव तादृशंशरण्य
प्रसादनेऽलम् तद्भावेयाचनत्वस्याप्यभावेशरण्यगृहागमन-
मेवतच्छरणागतत्वसाधनेऽलम् ॥

पृथगृहागममेवतच्छरणागतत्वसाधनेऽलम् ॥ एषांचतुर्णांमध्येऽन्यतरमेव(अन्यतरमेवएकएव)शरणागतत्वसाधनेऽलंचतुर्णां समूहस्तु महाशरणागति साधनमित्यर्थः ॥ अपिशत्रुंशत्रुमपिकिंपुनरपिशत्रुमित्यपेक्षार्थः ॥ परंतपइति कंचिद्राजानंसंबोधयतिक्रएडुः ॥ शिष्टं स्फुटार्थम् ॥ ४ ॥ आर्तोवायदि वाद्दृप्तः परेषां शरणंगतः ॥ अरिः प्राणान्परित्यज्य रक्षितव्यः कृतात्मना ॥५॥ आर्त्तइति ॥ आर्तोदीनोद्दृप्तः शरणागतिवेलायामप्यत्यक्तगर्वः ॥ अत्यक्तशत्रुभावोवा ॥ एवंभूतोऽरिः शत्रुः परेषांस्वशत्रूणां शरणंनिवासभूमिं गतोयदितदा कृतात्मना गुरुशास्त्रशिक्षित बुद्धिनास्वप्राणानपि परित्यज्यरक्षितव्यः ॥ रक्षितव्यइति विधिप्रयोगः ॥ अवश्यमेवरक्षितव्यः ॥ अन्यथा विधिविहितत्यागेन पापभागित्वप्रसक्तेरित्यर्थः ॥५॥ तत्त्यागे तत्पापभागित्वमयशोभागित्वंचतस्याह ॥ सचेदिति ॥ सचेद्भयाद्वामोहाद्वा कामाद्वापिनरक्षति ॥ स्वयाशक्त्यायथा सत्वंतत्पापं लोकगर्हितम् ॥ ६ ॥ सशरण्यश्चेद्यदिस्वशरणागत शत्रुभयात् ॥ १ ॥ स्वशत्रुशरणागत शत्रुभयाद्वा ॥ मोहाद्वाशरण्यधर्माज्ञाद्वा कामाद्वास्वशरणागत शत्रुशत्रोर्द्रव्य लाभकामनया वा स्वशरणागतंस्वया शक्त्या यथाबलंनरक्षति चेत्तदातत्पापं तस्यशरणागतस्याजन्मकृतंपापंप्राप्नोति ॥ लोकगर्हितंलोकनिंदांच प्राप्नोतीत्यर्थः ॥६॥ नकेवलंतत्पापं लोकनिंदांचप्राप्नोतिकिंतुस्वसुकृतस्यसर्वस्यहानिमपिप्राप्नोतीत्याह॥ विनष्टइति॥ विनष्टः पश्यतस्तस्यरक्षिणःशरणागतः॥आदायसुकृतंतस्य सर्वंगच्छेदरक्षितः ॥ ७ ॥ तेनरक्षिणा अरक्षितः सन्तस्यपश्यतः सतः शरणागतोविनष्टश्चेत्तदा तस्यरक्षिणः सर्वंसुकृतंपुण्यमादायगच्छेत् ॥ शरणागतपापस्य शरण्येगतत्वान्निः पापःस गृहीत शरण्य सर्वसुकृतप्रभावेनस्वर्गंगच्छेदित्यर्थः ॥ सतुशरण्यः स्वसर्वसुकृतस्यहानात् स्वपापप्रभावाद्विनष्ट शरणागतप्राप्तपापप्रभावाच्च नरकंगमिष्यतीतिभावः॥७॥ उक्तार्थमेवस्फुटयति ॥ एवं दोषइति॥ एवंदोषोमहानत्रप्रपन्नानामरक्षणे।अस्वर्ग्यंचायशस्यंचबलवीर्यविनाशनम्॥८॥प्रपन्नानामिति॥

शत्रुशरणागतानां स्वस्वरूपपरस्वरूप ज्ञानित्वाऽनुपपत्तेरीदृशज्ञानपूर्वकंभगवच्छरणागमनानुपपत्तेश्च ॥ केवलशत्रुभयात्तेषांशरण्यशरणागमनत्वोपपत्तेश्चकेवलं राघवं शरणंगतोऽस्मितवास्मीतियाचनमात्रेणातेषांशरणागत्युपपत्याप्रपन्नत्वोपपत्तेरुक्तं प्रपन्नानामिति । अत्र प्रपन्नानामरक्षणे एवंप्रकारकः स्वसुकृतहानि शरणागतपापप्राप्तिरूपोमहान्दोषः ॥ दोषस्यमहत्वंतु नरकप्रापकत्वादुपपद्यते । एतदेव स्फुटयति ॥ अस्वर्ग्यमिति ॥ अरक्षितविनष्ट शरणागतपापं कर्त्तृभूतं शरण्याऽरक्षिणः अस्वर्ग्यं स्वर्गप्रदंनकिंतु नरकप्रदमित्यर्थः॥ इहलोकेतुअयशस्यम् । अयशः करं वलवीर्य्ययोर्विनाशनंच ॥ ८ ॥ एभिः श्रीराम वचनैरिदमवगम्यते ॥ शत्रुर्वाऽशत्रुर्वाशरणागतो रामेणारक्षितश्चेत्तदास्वसर्वं पापं रामस्यदत्वातदक्षयसुकृतंचादायतस्यालौकिकविलक्षणसुकृतप्रभावेनालौकिकं विलक्षणमेव तत्परधाम परविभूत्याख्यं गमिष्यति रक्षितश्चेत्तेन तदासस्वयमेव सत्यप्रतिज्ञः सत्यवादीरामोऽभयपदवाच्यं मोक्षाख्यं स्वपरंपदं दास्यतीत्युभयथापि श्रीरामशरणागतस्य श्रीरामपरमपद प्राप्तिर्भविष्यतीतिशास्त्रांतरोक्तशरणागतिभ्योविलक्षणेयं शरणागतिरुक्ताप्तवादिनावाल्मीकिना श्रीरामस्यमहर्षिगणमोहकत्वेनविग्रहांतररूपादिविलक्षणरूपादेर्विष्णवनेकसहस्रनामतुल्य सर्व वेद सर्वमन्त्र जपपुण्य कोटिगुणाधिक पुण्यप्रद विलक्षणरामनाम्नः समस्त भगवद्विग्रहविलक्षण लोकमलघ्नकीर्तेः स्वनिवासिपरमपदप्रापकाऽयोध्याख्यधाम्नः यतः सर्वविलक्षणरूप नामलीलाधाम्नः श्रीरामस्यशरणागतेरपिसर्वविलक्षणत्वमुपपद्यते ॥ अतो महर्षिणा तच्छरणागतिरपीयंभगवद्विग्रहांतर शरणागतेर्विलक्षणोक्ता भवतोत्यः सर्वैरपि श्रीरामप्राप्तिःकामैः ॥ श्रीरामशरणागतत्वेन भाव्यमितिपूर्वोक्त शरणागत परवाक्यानामभिप्रायः ॥ अतएवपूर्वोक्त कण्डुवाक्योक्तरीत्यास्वशरणागत रक्षणस्य प्रतिज्ञां करोति श्रीरामः करिष्यामीति ॥ करिष्यामि यथार्थं तुकण्डोर्वचनमुत्तमम् ॥ धर्मज्ञस्य चरान्यस्य स्वर्ग्यंस्यात्तुफलोदये ॥ ९ ॥ करिष्यामि ॥ अहमवश्यं स्व-

शरणागतं रक्षिष्यामि नतु त्यक्ष्यामीत्यर्थः ॥ यथार्थम् ॥ अर्थमनतिक्रम्येति यथार्थम् ॥ यथोक्तमित्यर्थः ॥ उद्गच्छतितमोऽज्ञानंयस्मात्तदुत्तमशरण्य शरणागतधर्मज्ञस्य ॥ वद्धांजलि पुटंदीनंयाचंतं शरणागतम् ॥ इतिशरणागतिधर्माउक्ताः ॥ नहन्यात् ॥ अरिः प्राणान्परित्यज्य रक्षितव्यइति शरण्यधर्माउक्तास्तान्धर्मान् जानातीतिधर्मज्ञस्तस्य स्वर्ग्यं स्यादिति तुप्राकृत कपोताद्यभिप्रायेणोक्तम् ॥ तेषांस्वर्गस्य दुर्लभत्वात् ॥ शिष्टंस्पष्टम् ॥ ६ ॥ ममतु शरणागत रक्षणोधर्मोऽनादिरित्याह ॥ सकृदेवेति ॥ सकृदेवप्रपन्नायतवास्मीतिचयाचते ॥ अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतंमम ॥ १० ॥ इति॥ अयं रामः सर्वथा रक्षणसमर्थो मामवश्यं शत्रुभयात्संसारभयाद्वारक्षिष्यतीतिदृढविश्वासवान् प्रपन्नः ॥ मित्रभावेनसंप्राप्तमित्युपक्रमात् ॥ मध्येपिकपोतकण्डुवाक्योदाहरणेन॥ वद्धांजलिपुटंदीनंयाचंतंशरणागतम् ॥ इति ॥ वद्धांजलिपुटादीनां चतुर्णामेव शरणागति हेतुत्वोक्तेश्च ॥ एवंदोषो महानत्रप्रपन्नानामरक्षणे ॥ इति ॥ शत्रुशरणागतानां प्रपन्नत्वोक्तेश्च ॥ शत्रुशरणागतानां सर्वेषां स्व स्वरूप परस्वरूप विशेषज्ञानवत्वानुपपत्तेश्च ॥ उक्त प्रकारकोयो विश्वासो बुद्धेर्व्यवसायरूपो धर्मस्तद्वानेवात्र प्रपन्नपदेन विवक्षितः ॥ १० ॥ मत्प्राप्त्यर्थं तयामयोक्तमखिलं संत्यज्य धर्मंपुनर्मामेकं मदवाप्तये शरणमित्यार्तोऽवसायंकुरु ॥ त्वामेवं व्यवसाययुक्तमखिल ज्ञानादि पूर्णोह्यहं मत्प्राप्तप्रतिवन्धकैर्विरहितं कुर्य्यां शुचंमाकृथाः ॥ ११ ॥ मत्प्राप्ति प्रयोजन तया मत्प्राप्ति साधनतयेत्यर्थः ॥ येमयोक्ताः कर्मज्ञानादयोधर्मास्तान्संत्यज्यत्वं मदवाप्तये मामेकं शरणमुपायमित्यवसायंकुरु ॥ भगवानेव स्वप्राप्तेरुपायोऽस्तिनान्यः कर्मज्ञानादिरिति निश्चयंकुर्वित्यर्थः ॥ त्वामेवं व्यवसाययुक्तम् ॥ एवमुक्तप्रकारक व्यवसाययुक्तंत्वां मत्प्राप्ति प्रतिवंधकैर्विरहितं कुर्य्याम् ॥ मत्प्राप्ति प्रतिवंधक विरहितोपलक्षितं मोक्षंदद्यामित्यर्थः ॥ इतिमंत्रार्थ कारिणाचार्येणापि भगवत्प्राप्तिरुपायो भगवानेवेति व्यवसाययुक्तस्यैव मोक्षप्रतिवंध करहितत्वो

कथा तादृश व्यवसायवत एव प्रपन्नत्व ज्ञापनात् ॥ १९ ॥ तथैव भगवता कृष्णेनाप्युक्तत्वात् सर्वधर्मानिति ॥ सर्वधर्मान्परित्यज्य मामेकं शरणंव्रज ॥ अहंत्वां सर्वपापेभ्यो मोक्षयिष्यामिमाशुचः ॥ २॥ इति ॥ मत्प्राप्ति साधनत्वेनयेधर्मामयोक्ताः कर्मादयास्तान्सर्वान्परित्यज्य मामेकं शरणं रक्षकं मत्प्राप्त्युपायं व्रजगच्छ व्यवसायं कुरु ॥ मामेकं शरणमित्यार्त्तोऽवसायं कुर्वित्याचार्य्यवचनात् । व्रजगताविति धातुसूत्रात् ॥ गत्यर्थानां ज्ञानार्थत्वात् ॥ व्यवसायस्यबुद्धिधर्मत्वाच्च॥ एवंव्यवसाययुक्तं त्वामहंसर्वज्ञत्वेनसर्वावतरगतत्वेनचोक्तप्रकारकत्वव्यवसायज्ञानवानं सर्वशक्तित्वेन मत्प्राप्ति विरोधिभ्यः सर्व पापेभ्योमोक्षयिष्यामि॥ सर्व पापेभ्यो विमोच्यात्मानं प्रापयिष्यामीत्यर्थः॥ तथा च सर्वोपाय परित्यागपूर्वक भगवत्प्राप्त्युपायो भगवानेवेति व्यवसायवान्प्रपन्नः स एवमोक्षाधिकारीति शरणागति परभगवद्वाक्यादप्यवगम्यते॥ न चात्र वाल्मीकीये सर्वोपाय परित्याग पूर्वकं भगवदेकोपायत्वं तुनोक्तम्॥ किंतु विश्वासवत्वं बद्धांजलि पुटत्वंदीनत्वं याचनत्वं स्वनिवास स्थानागतत्वं चेत्येतावन्मात्र मेवेत्याशंकनीयम् ॥ मित्रादि रक्षकांतरे सतिशत्रोः शत्रु शरणागमनत्वानुपपत्तेः ॥ यथाशत्रोः शत्रुशरणागमनमन्यथाऽनुपपद्यमानं तस्यरक्षकांतररहितत्वमुपपादयति ॥ तथैवोपायांतर निष्ठस्वरक्षकत्वबुद्धेः श्रीरामशरण गमनत्वानुपपत्तेः ॥ तस्य श्रीरामशरणागतत्व मन्यथानुपपद्यमानमुपायांतर निष्ठ श्रीरामप्रापकत्वमुपपादयति ॥ इत्येवंवाल्मीकि वचनाभिप्रायेणापि मित्रभावेन दृढविश्वासेन प्राप्तस्य शत्रोरशत्रोर्वा सर्वोपायत्याग पूर्वक भगवदेको पायत्वसिद्धेः॥ उपायत्वमुपेयत्वमीश्वरस्यैवयद्भवेत् ॥ शरणापत्तिरित्युक्ता शास्त्रमानाद्विवेकिभिः॥ १ ॥ इत्यभियुक्त वचनाच्च भगवदेकोपायोपेयत्वस्य तच्छरणागत्वसिद्धेः॥ उपायांतर परित्यागपूर्वकं श्रीरामएव स्वप्राप्तेरुपाय इतिदृढव्यवसायवान् प्रकर्षेण शरणापत्ति साधन सामग्री पौष्कल्येन बद्धांजलि पुटत्वेन दीनत्वेन याचनत्वेन स्व

श्रीरामंशरणं रक्षकंपक्षः प्राप्तोयः सप्रपन्नः ॥ तस्मैप्रपन्नाय ॥ सकृदेव न तु वारंवारं तवास्मित्वदीयोऽस्मि तवशेषभूतोस्मीत्यतोमां रक्षेति योयाचते तस्मैचेति ॥ दासोस्मि शेषभूतोस्मि तवैवशरणंगतः ॥ पराश्रितोऽहंदीनोऽहं पाहिमां करुणाकर ॥ १ ॥ इतिपंचरात्रोक्तशरणागति परवाक्य प्रमाणादित्थं व्याख्यातंमया ॥ अत्र सकृदेवे[१]ति सकृत्पदेनस्वप्रपत्ता वनावृत्तिरुक्ता सत्यप्रतिज्ञेन श्रीरामेणातस्तत्प्रपत्तावावृत्तिर्नास्ति ॥ किंतु सकृत्पितृ समर्पिताकन्यायथा स्वपतेर्भार्य्याभवतिस्वपितृगोत्रं विहायस्वपतिगोत्रीया च भवति ॥ तथैव सकृद्गुरु समर्पितोयंजीवः श्रीरामस्य प्रपन्नोभवति स्वपितृगोत्रं विहायाच्युत गोत्रश्च भवतीति ज्ञेयम् ॥ भक्तौत्वावृत्तिरवगम्यते ॥ स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ॥ सर्वेविधि निषेधाः स्युरेतयोरेवकिंकराः ॥ १ ॥ इत्येवमादि स्मृतिभ्यः ॥ आवृत्तिरसकृदुपदेशादितिव्याससूत्राच्च ॥सर्वभूतेभ्यः॥ इतिभयहेतुभ्यःपञ्चमी ॥सर्व भूतेभ्योऽभयं भयाभावं मोक्षमित्यर्थः ॥ अथसोऽभयं गतोभवतीतिब्रह्मविद्योपसंहारश्रुतेः ॥ ददामि सकृदेवनतु वारंवारम् ॥ मद्दत्तसर्वभूताभयस्य भयहेतुभूताऽनव शेषण पुनर्भयप्राप्त्यसंभवतया पुनरभयदानस्य प्रयोजनाभावात् ॥ एवंमद्दत्तमोक्षस्य पुनरावृत्त्यभावेन पुनर्मोक्षदानाऽनुपपत्तेः सकृदेवेत्युक्तम् ॥ द्विःशरंनाभिसंधत्ते द्विःस्थापयति

---

टि० (१) अत्र श्रीरामेण सत्य प्रतिज्ञेन स्वप्रपत्तौ अनावृतिर्न-आवृतिः प्रवृतिः अनावृतिः सासकृदेवेत्युक्तानतुवारंवारम् ॥ तदुक्तम् ॥ सकृज्जल्पंतिराजानः सकृज्जल्पंति पंडिताः। सकृत्कन्याप्रदीयंते त्रीण्येतानि सकृत्सकृत् ॥ इति ॥ अतस्तत्रास्य श्रीरामचन्द्रस्य प्रपत्तौ आवृतिर्वारंवार प्रवृति र्नास्तीतिज्ञेयम् ॥ भक्तौत्वावृतिर्वारं वारंप्रवृतिरवगम्यते तदुक्तमग्रे स्मर्तव्यः सततं विष्णुरिति

रामोद्विर्नाभिभाषते ॥ १ ॥ इति-
नाश्रितान् ॥ द्विर्ददातिन चार्थिभ्यो
तस्यैव वचनांतराच्च ॥ एकेन शरेणतद्विनाश कारित्वान्नद्विः शरम-
भिधत्ते । तत्स्थापितस्य तस्यतदुःस्थापकद्वितीयाभावान्नद्विः स्थापय
ति । तद्वत्सार्थस्याक्षय्याभवे तदर्थित्वाभावात्पुनस्तेभ्योदानाऽनुपपत्तेर्नद्वि
र्ददातीत्युक्तम् ॥ यद्वदति तदेववदतिन तद्विपरीतं वदतीत्यभिप्राये-
णोक्तं रामोद्विर्नाभिभाषते इति ॥ एतद्व्रतंममेति ॥ मम सत्यप्रतिज्ञस्य
सत्यवादिनः सत्यसंकल्पस्यैतत्सनातनं व्रतं सनातनो नियमोऽस्ती-
त्यर्थः ॥ तदेतद्व्रतं राघवस्यनिर्बाधमिति तस्यैववचनैरव गम्यते ॥
तद्ब्रूहि वचनंदेवि राज्ञो यदभिकांक्षितम् ॥ करिष्येप्रति जानेच रामो
द्विर्नाभिभाषते ॥ १ ॥ अप्यहं जीवितं जह्यां त्वांवासीते सलक्ष्मणम् ॥
नहिप्रतिज्ञां प्रतिश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥ २ ॥ इत्येवमादिभिः ॥
अत्रपंच रात्रोक्ता आनुकूल्यादयोऽपिधर्मा उपलभ्यंते ॥ तथाहि ॥
आनुकूल्यसंकल्पंप्रातिकूल्यविवर्जनम् ॥ विनाशरण्य समीपगमनानुप-
पत्तेः ॥ शरण्यशरणगमनमात्रेण तयोर्द्वयोरुपपत्तेः ॥ मित्रभावपदस्य-
रक्षाविश्वासार्थकत्वाद्रक्षा विश्वासत्वोपपत्तेः ॥ दैन्यपूर्वकरक्षकस-
मीप गमनत्वस्यकार्पण्योपपत्तेः ॥ तवास्मीतिमांरक्षेति याचनस्यगो-
प्तृत्ववर्णनत्वोपपत्तेः ॥ तवास्मि ॥ अद्यप्रभृतिनान्यस्य नस्वस्यचेत्या
त्मसमर्पणनांतरीकतयात्मीयासमर्पणस्याप्युपपत्तेः ॥ षड्विधाप्रप-
त्तिरपितवास्मीति याचकस्यनिष्पद्यते ॥ सयाचनप्रकारः पंचरात्रे-
उक्तः ॥ संसारसागरान्नाथौपुत्रमित्रग्रहाकुलात् ॥ गोप्तारौमेदयासि-
धूप्रपन्नभयभंजनौ ॥ १ ॥ योऽहंममास्तियत्किंचिदिहलोकेपरत्रच ॥
तत्सर्वंभवतोरेवचरणेषुसमर्पितम् ॥ २ ॥ अहमस्म्यपराधानामालय-
स्त्यक्तसाधनः ॥ अगतिश्चततोनाथौ भवंतावेवमेगती ॥ ३ ॥ शरणं
वांप्रपन्नोस्मिकरुणानिकराकरौ ॥ प्रसादंकुरुतांदासेमयिदुष्टेऽपराधि-
नि ॥ ४ ॥ तवास्मिजानकीकांतकर्मणामनसागिरा ॥ रमाकांततवैवा-
स्मि युवामेवगतीमम ॥ ५ ॥ मत्समोनास्तिपापात्मा त्वत्समोनास्ति-
पापहा ॥ इतिसंचिंत्यदेवेश यथेच्छसितथाकुरु ॥ ६ ॥ अन्यथाहिगति-

नास्ति भवंतौहिगतिर्मम ॥ तस्मात्कारुण्यभावेन ॥ कृपांकुरुकृपानिधे ॥७॥ दासोस्मिशेषभूतोस्मितवैवशरणंगतः ॥ पराधितोऽहंदीनोहं पाहिमांकरुणाकर ॥८॥ कुरुष्वमामनुचरं वैधर्म्यंनेहविद्यते ॥ कृतार्थोऽहंभविष्यामि तवचार्थंप्रकल्पये ॥ ९ ॥ इतीमानिपंचरात्रोक्तान्यात्मीयसमर्पणवाक्यानि बद्धांजलिपुटोदीनश्च भूत्वाभगवदग्रेपठन् पुनःपुनःसाष्टांगंचप्रणमन् ॥ आत्मीयंचयत्किंचिदस्त्यैहिकपारलौकिकंचतत्सर्वं श्रीजानकीरामचरणेषु गुरुद्वारासमर्प्य ममसमर्पितं स्वीकुरुतां प्रपन्नार्त्तिभंजनाविर्तिप्रार्थयित्वा यावज्जीवंसकृत्पतिगृहीतहस्तपतिव्रतास्त्रीवस्वपतिं श्रीरामंस्मरन्तत्कैंकर्य्यंकुर्वन् कालंक्षिप्त्वा देहांते ॥ अर्चिरादिमार्गेणत्रिपाद् विभूत्याख्यं श्रीरामधामोपेत्यतस्मिन् श्रीरामसायुज्यंसंप्राप्यते नसमंनंदेत् नततःपुनरिहसंसारे आगच्छेदिति ॥ नसपुनरावर्त्ततेन सपुनरावर्ततेइतिछांदोग्यचरमश्रुतेः ॥ अनावृत्तिः शब्दादनावृत्तिः शब्दादितिव्यासचरमसूत्राच्च ॥ अत्रात्मात्मीयसमर्पकायेप्रपन्नाउक्ता ॥ येचसंबंधज्ञानयाथात्म्यज्ञानिनः ॥ येचोपाययाथात्म्यज्ञाननिष्ठामुख्याः प्रपन्नास्तत्कर्तृकासेवा विद्यतेयस्यसतथोक्तस्तस्मैप्रपन्नजनसेविने तत्सेवाकांक्षिणेइत्यर्थः ॥ ईदृशैःप्रपन्नैः श्रीरामएवसेव्यो नान्य इति नारदस्याभिप्रायः । तस्यसंबन्धयाथात्म्य ज्ञानस्यलक्षणम् । तस्याउपाययाथात्म्य ज्ञाननिष्ठाया लक्षणं च पूर्वाचार्य्यै रुक्तंभवति । उपायज्ञानं नामचतुर्विधम् । संबंधज्ञानम् । संबंधयाथात्म्यज्ञानम् । संबंधस्वरूपज्ञानम् संबंधस्वरूपयाथात्म्य ज्ञानम् । तत्रसंबंधज्ञाननाम । श्रियःपत्युर्निरुपाधिक शेषित्वंस्वस्यनिरुपाधिकशेषत्वंज्ञानंच सम्यक्ज्ञात्वास्थितिः । संबंधज्ञानंभवति । संबंधयाथात्म्यज्ञानंनाम । श्रियःपत्युर्निरुपाधिक शरीरित्वं स्वस्यनिरुपाधिशरीरत्वं ज्ञात्वास्थितिः संबंधयाथात्म्यज्ञानंभवति । संबंध स्वरूपज्ञानंनाम । श्रियःपत्युर्निरुपाधिक धर्मित्वं स्वस्यनिरुपाधिक धर्मत्वं च ज्ञात्वास्थितिः । संबंधस्वरूपज्ञानंभवति । संबंधस्वरूपयाथात्म्यज्ञानंनाम । धर्मिधर्मयोरैक्यं सम्यक्ज्ञात्वास्थितिः । एक्यंनाम

विशिष्टविशेषेसतिसएवसन् स्वयंयथानप्रकाशते तथाचस्थितिः (वि-शिष्टं विशेषणं विशेषं विशेष्यं तस्मिन्सति सः श्रीरामचन्द्रः एवंसन् यथायेनप्रकारेण तस्मात् श्रीरामचन्द्रादन्यत्वेन स्वयंप्रकाशते तथा चस्थितिः)। एवयभवति। उपाययाथात्म्यज्ञानंनाम। तन्निष्ठौनाम शेषत्वे कर्तृत्वनिवृत्तिः। कर्तृत्वे कर्तृत्वनिवृतिः। भोक्तृत्वे कर्तृत्व-निवृत्तिश्च। शेषत्वेकर्तृत्वंनाम॥ राजाज्ञयाजगत्पीडां कुर्वतोमंत्रिणा इव। भगवद्दासतयासदाचार श्लथनंकृत्वातिष्ठतीतियत् तत्र सदा-चारंनामशब्दादिविषयेभ्योऽभयं भगवद्भागवतकैंकर्य्येष्वासक्तिश्च। एतन्नसंभवतीति यत्तदेवश्लथनम्। शेषत्वेकर्तृत्वभवति तन्निवृत्ति-नामग्रामादिकविषयस्पर्शः ग्रामादिककैंकर्य्यविश्लेषश्चनोदेतीतियत् स्थितितन्निवृत्तिर्भवति। ज्ञातृत्वेकर्तृत्वंनाम। वयंज्ञातारइति। कृत्वा खलुश्रियःपतिरस्मानंगीकृत्यतवानिति स्वज्ञातृत्वस्यहेतुत्वकल्पनम् तन्निवृत्तिस्तु। देहाभिमानिनांमध्येऽत्यंतनिकृष्टोऽहमसतात्मकल्पः इन्द्रियजितोऽहम्। एवंविधंमामयः सुवर्णंकृत्वा। आत्मज्ञानमुपदिश्य एवमंगीकृतवंत इतिकृतज्ञतयास्थितिः तन्निवृत्तिर्भवति। कर्तृत्वेकर्तृ त्वंनाम। वयंनिषिद्धानिपरित्यज्य विहितान्येव कुर्वंतः स्थिताः॥ इत्यस्मानंगीकृतवानिति स्वप्रयत्नस्यस्वांगीकारेहेतुत्वकल्पनम् कर्तृत्वेकर्तृत्वंभवति तन्निवृत्तिः। अस्माकंव्यापारः कोपिनास्तिदारु-पुत्रिकानाटकइव निषिद्धानित्याजयित्वाविहितानिकारयतीतिस्थितिः तन्निवृत्तिर्भवति॥ भोक्तृत्वेकर्तृत्वंनाम। वयंतुसेवांकुर्वंतः स्थिता इतिस्थितिः भोक्तृत्वेकर्तृत्वंभवति तन्निवृत्तिस्तु। स्वहस्तेनस्वकेश-संस्कारेकृतेऽन्योन्यमुपकारस्मृतिर्यथानभवति। तथैवावयवभूतेनात्मा अवयविनः श्रियःपत्युः कैंर्येक्रियमाणे सत्यन्योऽन्यमुपकारस्मृति-र्यथानभवेत्तथास्थितिस्तन्निवृत्तिर्भवति तथास्थितः (तस्यभोक्तृत्वे कर्तृत्वस्यनिवृत्तिः) सन् तिष्ठतीतियस्सप्रपन्नस्तत्कर्त्तृ कासेवाविद्यतेयस्यतस्मैतत्सेवाकांक्षिणेइत्यर्थः। ईदृशान् प्रपन्नजनान् सेवितुं शीलमस्येति प्रपन्नजनसेवी तस्मैइत्यिवातदुक्तम्। दर्शनध्यानसंस्पर्शै

मत्स्यकूर्मविहंगमाः । स्वाल्पापत्यानि पुष्णंति तथाहमपिपद्मज ॥१॥ इतिभागवतेऽपितथैवोक्तम् । नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना । श्रियंचात्यंतिकीं ब्रह्मन्येषांगतिरहंपरा ॥ २ ॥ येदारागारपुत्राप्तान्प्राणान्वित्तमिमंपरम् । हित्वामांशरणंयाताः कथंतान्त्यक्तुमुत्सहे ॥ इति ॥ ५२ ॥

# वंदामहेमहेशानं चण्डकोदंडखंडनम् ॥ जानकीहृदयानंद चंदनंरघुनंदनम् ॥ ५३ ॥

वंदामहेति ॥ वयंरघुनन्दनं वंदामहे ॥ अत्र बहुवचनं ग्रंथप्रवर्तकगरपराभिप्रायकम् । अस्मदोद्वयोश्चेति पाणिनिस्मरणाद्वा ॥ रुद्रकोदण्ड खण्डनजात जानकीहृदयानन्द जनित हर्षनिर्भरत्वेनात्मनिबहुमाननाद्वा । की दृशनम् । महेशानम् । महांश्चासावोशानश्च महेशानस्तम् ॥ तंदेवतानांपरमं चदैवतं तमीश्वराणांपरमंमहेश्वरम् । पतिंपतीनांपरमंपुरस्ताद्विदामदेवं भुवनेशमीड्यम् ॥ १ ॥ इत्येवमादिश्रुत्युक्तम् ॥ तन्महेशानत्वेहेतुमाह ॥ चण्डकोदण्डखण्डनमिति ॥ चण्डस्य रुद्रस्य जगत्प्रलयकर्तुः कोदंडंधनुः खण्डयतीतितथातम् ॥ अनेनराघवस्यपारमैश्वर्य्यंव्यक्तीकृत्य मनुष्यवेषेणापितस्यैश्वराभिमानिनोऽतिक्रमेणपरममाधुर्य्यपोषितम् ( ईश्वराभिमानिनो रुद्रस्यातिक्रमेणतस्य राघवस्यपरममाधुर्य्यंपोषितम् ) ॥ तदेवतस्यराघवस्यपरममाधुर्य्यं रसिकत्वंस्वैक निष्ठदुःखासहमानत्वं झटितितदानन्द करत्वं चस्फुटयति ॥ जानकीति ॥ येनेदंशिवकार्मुकंभंकुं शक्यं सएवमत्पुत्र्यावर इति राज्ञोजनकस्यपण आसीत्तस्मात् (तस्मात्जनकपणात्प्रतिज्ञातः) सुकुमारेणतेनेदं महत्कर्मकथंस्यादित्युत्पन्नयाशंकया किंभावीत्यनिष्ठापंति संतप्तस्य श्रीरामानुरागिणोजानकीहृदयस्यानंदयितुंचन्दनमिवशैत्यकरम् ॥ चण्डकोदंड खण्डनेनेत्यर्थः । अत्रतस्य चण्डकोदंड खंडनेपरमैश्वर्य्यं जानकीहृदयानन्द चन्दनत्वेन परममाधुर्य्यं जानकीप्रा-

प्त्यर्थं चण्डकोदंडखण्डनेनपरमरसिकत्वंस्फुटीकृत्येदृश रामस्योपा-
शकत्वेनात्मनि बहुमाननांद्वंदामहे इतिबहुत्वंचोपात्तम् ॥ रघुनंदनमि-
तितद्धनुः खण्डनपूर्वक जानकीप्राप्त्या रघूणामानन्दनमित्युपलक्ष-
णम् ॥ स्वसंबंधि सर्वजनानन्दनस्य गुरुमातृपितृ भ्रातृमित्राद्यानन्द
वर्द्धन मित्यर्थः ॥ ५३ ॥

## उत्फुल्लामलकोमलोत्पलदलश्यामाय रामायनः ।
## कामायप्रमदामनोहरगुणग्रामाय रामात्मने ॥
## योगारूढमुनींद्रमानससरोहंसायसंसार विध्वं-
## सायस्फुरदोजसेरघुकुलोत्तंसायपुँसेनमः ॥५४॥

एवंतस्यजानकीवल्लभत्वंस्फुटीकृत्याथ तस्यानेकप्रमदावल्लभ
त्वनिर्देशेन परमरसिकत्वंमुनींद्रमानससरोहंसत्वेन परमोपास्यत्वं
संसारविध्वंसत्वेन मोक्षप्रदत्वंस्फुटयति ॥ उत्फुल्लेति ॥ नमोस्तु
रामदेवाय जगदानन्दरूपिणे ॥ इत्युक्तायस्वरूपसौंदर्य्यादिगुणैः स्त्री
पुरुषात्म सर्वजगदानन्दप्रदायरामायनोऽस्माकं नमः प्रणतिरस्तु ॥
पुंसेइति ॥ वेदवेद्येपरेपुंसि जातेदशरथात्मजे ॥ इत्युक्तायपरस्मैपुंसे ॥
पुमानेकोविनिश्चितः ॥ इत्युक्तेः ॥ अन्येषांपुरुषाणामौपाधिक पुरुषत्व
स्त्रीत्वेनोपाध्यभावेन तत्पुरुषत्वस्त्रीत्व व्यत्यया ( उपाध्यऽभावेन-
पुरुषत्वमूलभूतकर्माऽभावेनतत्तस्य पुरुषत्वस्य स्त्रीत्वस्यव्यत्यया
त्विपरीतात्पुरुषस्य स्त्रीभवति स्त्रियः पुरुषोभवति ) तेषांपुरुषत्वस्य
स्वभाविकत्वासिद्धेः ॥ रामस्यतूपाधिसंसर्ग रहितस्यस्वभाविक पुरु-
षत्वसिद्धेर्यउक्तऋषिभिः ॥ पुमानेकोविनिश्चित इतितस्मैपुंसेचेत्यर्थः ॥
कीदृशाय ॥ उत्फुल्लंविकसितममलंनिर्मलंकोमलं मृदुलं यदुत्पलं नील-
नीरजपत्रंतद्वत्श्यामस्तस्मै ॥ तत्सदृशस्या भावात्सदृशोपमाऽलाभे-
ऽप्यमुपमा।तस्मादनंतगुणाधिकविकसितोज्ज्वल कोमलश्यामलेत्यर्थः॥

अतएवकामाय ॥ उत्फुल्लत्वोऽज्वलत्वादीयत्तारहितत्वेन कार्त्स्न्येनमनीतेश्चाद्यगम्य तयाकेवलंस्पृहणीयाय । अप्राकृत मन्मथायवा ॥ नकेवलंस्पृहणीयः ॥ नवाकामवदति सौंदर्य्येण प्रमदानांमनोहारीकेवलम् ॥ किंतुतासामभिलाषापूरकोपीत्याह ॥ प्रमदेति ॥ प्रमदानांस्वरूपसौंदर्यदर्शनं जातातिप्रेममत्तानांस्वकीय रूपादि सौष्ठवेनदर्प्पजनप्रमादकर्तृणांच ॥ युवतीनां मनोहरोगुणग्रामः ॥ गांधर्वेचभुविश्रेष्ठोबभूवभरताग्रजः ॥ इति महर्षि वचनादपिगानवाद्यादि स्मितभाषण स्मितप्रेक्षण नर्मालापक्रीडाकौशलादि गुणग्रामो यस्यंतस्मै ॥ स्वदर्शनमात्रेण परदृष्टि चित्तापहारीणीनां परमसुन्दरीणामपि मनोहरगुणग्रामेण मनोपहृत्यताभिः सहविहारणे इत्यर्थः ॥ अन्यथा गांधर्वे चभुविश्रेष्ठइत्येवमादि वाल्मीकिवचनानां प्रमदामनोहर गुण ग्रामायइतीदृशनारद वचनानांचवैयर्थ्यापत्तेः॥नच श्रीरामस्यगानादिगुणाति नैपुण्यज्ञापनाय वाल्मीकिनातथोक्तं नारदेनापि तस्यसौंदर्य्यातिशय ज्ञापनाय प्रमदा मनोहरगुणग्रामायेत्युक्तमितिवाच्यम् ॥ तस्यचक्रवर्तिपुत्रनरेंद्रस्यक्षत्रियस्य केषामपिपुरुषाणां राजादीनामग्रे स्वगांधर्व्य गुणप्रगट करणेन गायकत्वापत्तेस्तत्क्षत्रियधर्महानाच्च नकस्यापिपुरुषस्याग्रे तद्गानादिकमुपपद्यते ॥ नचैकाकीसगायति गानस्यवैयर्थ्यापतेः ॥ नवाजानकीवशीकरणायस्वस्मिन्तत्प्रीत्युत्पादनायच॥ तच्चित्तहर्षायच तद्गानादिकमुपपद्यते॥ जानक्याः श्रीरामरूपदर्शनमात्रेण तद्भार्य्यत्वेनच तद्विषयकप्रीत्यतिशयेन तद्वशीभूतत्वात् ॥श्रीराममुखारविंददर्शनमात्रेणहर्षापन्नत्वाच्च ॥ नवास्त्र्यंतराणांवशीकरणायतद्गांधर्व्यम् ॥ पुरुषाणांतत्रापिमहर्षिगणानामरण्यवासिनामपि तद्रूपदर्शनमात्रेण तद्वशीभूतत्वोक्तेः कैमुत्यन्यायेनस्त्रीणांसर्वासां तद्रूपदर्शनमात्रेण तद्वशीभूतत्वोपपत्तेः ॥ तदेवंप्रसक्तानां प्रतिषेधेसत्यन्यत्रा प्रसङ्गात्परिशेषात् ॥ यदशोकवाटिकादिरहस्यदेशेप्युक्तम् ॥ अप्सरोगणसङ्घाश्चकिंनरीपरिवारिताः ॥ बालाश्चरूपवंत्यश्च स्त्रियः पानवशंगताः ॥ उपानृत्यंति राजानं नृत्यगीतविशारदाः ॥ १ ॥ दक्षिणाश्चारुसर्वांग्यः स्त्रियः सर्वगुणान्विताः॥

मनोभिरामा रामास्ता रामोरमयतांवरः ॥ २ ॥ रमयामासधर्मात्मा नित्यंपरमभूषिताः ॥ ताश्चतं रमयामासुर्नित्यमुद्भिन्नयौवनम् ॥ ३ ॥ इत्येवमादिभिः ॥ श्रीरामस्यरूपवतीनां बालानां श्रीरामसमीपेनृत्यगानकर्तृणांरमयितृत्वंतत्रैव तद्गांधर्व्यसाफल्यमेति ॥ कुतस्तत्ररमयामासेत्येतावन्मात्रोक्तेः कथंरमयामासकं रमयामासेत्यनुक्तेश्चत्रकः कथंरमयामासेत्यस्या आकांक्षायाः गानवादनादिभिः रासप्रकारेणरमयामासेत्थमेवपूर्त्युपपत्तेरन्यथा तद्गांधर्व्यस्य साफल्यादृष्टेश्चयाश्चारु सर्वांग्यः सर्वगुणान्विता नृत्यगीतविशारदाः स्त्रियः रामंपरित आवृत्यतदुपनृत्यंत्यस्तंरमयामासुः ॥ ताः सर्वाः रामोपिगांधर्व्येणगानादिनारमयामासेत्येवमेव गांधर्व्येषु भुविश्रेष्ठोरमयामासरमयतांवरः इत्येवमादीनां स्वार्थलाभात्तानीमानि पदान्यन्यथा स्वार्थमलभमानानिश्रीरामस्यसुन्दरीभिः रासविलासादिक मुपपादयंतीत्यवगंतव्यम् ॥ यत्तूच्यते पण्डितमानिभिः श्रीरामेण तासामप्सरोगणादीनां नृत्यादिकं दृष्टं श्रुतं च तद्गीतादिकम् ॥ नतुताभिः सहराशविलासादिकं कृतमितितन्नोपपद्यते ॥ तद्रासादिकं विनारामास्ताःरामोरमयतांवरः ॥ रमयामासेत्युक्तस्यतद्रमयितृवरत्ववचनस्यरामास्ता रमयामासेति श्रीरामनिष्ठाप्सरोगणादि रमयितृत्ववचनस्य वैयर्थ्यापत्तेः (अप्सरसां गणादेः रमयितृत्वं श्रीरामनिष्ठम् । रामः ताः रामाः रमयामासइतिवचनस्य वैयर्थ्यापत्तेः तन्नोपपद्यते इति पूर्वेणान्वयः ) ॥ यच्चोक्तं । नारदेनापितस्याति सौंदर्य्यज्ञापनाय प्रमदागणमनोहरगुणग्रामत्वमुक्तमिति तदपिनोपपद्यते ॥ नारदोक्तकामायेतिपदस्यैव श्रीरामस्यातिसौंदर्य्यज्ञापकत्वेन प्रमदामनोहरगुण ग्रामपदस्य तदर्थकत्वस्वीकारे ( तदर्थकत्व स्वीकारे श्रीरामस्याति सौंदर्य्यज्ञापनत्व स्वीकारे ) ॥ तुपुनरुक्तिदोषापत्तेः ॥ तत्पूर्वोक्तंनोपपद्यते ॥ तदभिप्रायवतस्तस्य तदभिप्रायवतः श्रीरामस्यातिसौंदर्य्य ज्ञापनत्वाभिप्रायवतः (तस्यनारदस्य ) ॥ पुरुषगण मनोहरगुणग्रामायेत्येवं वक्तव्यत्वाच्चतत्कुतः ॥ रूपौदार्य्यगुणैः पुंसांदृष्टिचित्तापहारकम् ॥ इति वाल्मीकिना ॥ पुराम-

र्षयः सर्वे दण्डकारण्यवासिनः ॥ दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन्सुविग्रहम् ॥ १॥ इतिव्यासेनापितदत्यन्तसौंदर्य्यज्ञापनाय तस्य महर्षिगणहृच्चित्तापहारकत्वात्तेन सहतद्भोगेच्छाया उक्तत्वाच्च ॥ स्त्रीणांतुस्वभावेनैवकामिनां कैमुत्यन्यायेन तद्वशीभूतत्वोपपत्तेः ॥ तत्रापि दृष्ट्वा रामं सुविग्रहमिति महर्षीणां तत्सुविग्रहस्यैवदर्शनमात्रेणरामेण सह भोगेच्छोत्पत्युक्तया स्त्रीणां कैमुत्यन्यायेन तद्रूपदर्शनमात्रेण रामेण सहभोगेच्छोत्पत्त्युपपत्तेः ॥ नप्रमदागणमनोहरगुणग्रामपदस्य तदत्यन्तसौन्दर्य्यज्ञापनायप्रयोगउपपद्यते ॥ अतः श्रीरामसुविग्रहदर्शनस्यैवमहर्षीणां प्रमदागणानां च तेन सहतद्भोगेच्छोत्पादकत्वोपपत्तेः प्रमदामनोहरगुणग्रामपदस्य प्रमदावशीकरणार्थकत्वानुपपत्तेः ॥ तद्रूपदर्शनमात्रेणतद्वशीभूताभिस्तेन सहभोगेच्छावतीभिः प्रमदाभिः सहरामस्य रासविलासादेः प्रमदामनोहरैर्बहुभिर्गुणैर्विनानुपपत्त्या रासादावेव प्रमदामनोहराणां बहूनां गुणानां यथाप्रयोजनं साफल्योपपत्तेः ॥ प्रमदामनोहर गुणानां कार्य्यान्तर साधकत्वानुपपत्तेश्च श्रीरामस्य प्रमदाभिः सहरासविलासादिज्ञापकत्वेनैव साफल्यमुपपद्यतेऽस्य प्रमदामनोहरगुणग्रामपदस्य नाऽन्यथा (अन्यथाश्रीरामस्य प्रमदाभिः सहरासविलासादिकं विनाप्रमदामनोहरगुणग्रामपदस्य साफल्यंनोपपद्यते)॥ यैरस्य वाक्यस्यान्यथार्थउच्यतेतैः ॥ प्रमदानां मनांस्यपहृत्यताभिः सहकिंकृतवान् प्रमदामनोहरगुणग्रामत्वेन रसिकशिरोमणीश्रीरामइत्यस्य प्रश्नस्योत्तरं वक्तव्यम् ॥ स्वगृहकार्य्यंकारयतीतिचेत्तर्हितस्यान्याः किंकर्य्योनसन्ति यद्भावेनाभिः स्वप्रेममताभिर्निकृष्टंकार्य्यं कारयतिनेदमुपपद्यते ॥ यासां स्वगुणग्रामेणमनां सिहरतिताभिर्निकृष्टकार्य्यस्य कारयितृत्वं तस्य रसिकशिरोमणेः ॥ लोकेऽपि यो यस्या मनोहरति स्वसौंदर्य्येणगीतादिना च स तया न गृहोपलेपनादिकं निकृष्टं कर्मकारयति। किंतूत्तमभोजन वस्त्रादिदानेन तांसुखयति स्वयमपितयासहसुखंकरोति। यदितु स ताभिः स्वदेहोपमर्दनंकारयतीत्युच्यते तर्हि। नरामः परदारांस्तुच

क्षुम्योमपिपश्यति॥ इतिमहर्षिवचनात्तस्यदेहस्पृशतीनां तासां तद्वार पपत्तिः। यदितुनरामस्तासां मनांस्यपहरति किंतु तद्रूपदर्शनमात्रेण स्वयमेवतासां मनांस्यपह्रियंते इत्युच्यते। तदातन्मनोहरगुणग्रामवचनस्यवैयर्थ्यापत्तिः। तत्सुविग्रह दर्शनमात्रेण महर्षिगणमनोपहृतत्वयत्तासामपि प्रमदानां श्रीरामसुविग्रह दर्शनमात्रेणेत्र मनोपहृतत्वोपपत्तेः। इतीथंवैयर्थ्यापत्तिः[1] केनापिप्रकारेण तदर्थकथने न जहाति प्रमदामनोहर गुणग्रामवाक्यं ऋनेताभिः सहरामः रासादिकं कृतवानितितद्वाक्य तात्पर्य्य वर्णनादित्यलं वहुविस्तरेण। रामात्मनेइति मनोभिरामाः रामास्ताः रामोरमयतांवरः इतिवचनात्। रामाः प्रमदाः तासुमनोयस्यतस्मै॥ इतिरामस्यपरमरसिकत्वं ज्ञापितम्। अथवारामा, जानकी, तस्यामात्मा मनोयस्यतस्मै। तदेकमनसेतद्वशीभूतायेत्यर्थः। अनेनयत्किञ्चित्कर्मकरोति रामस्तज्जानकीमनोऽनुसारेणैवेतिज्ञापितम्। अशोकवाटिकायां जानकीसहितस्यैव रामस्यप्रमदागणरमयितृत्वोक्तेः। मनोभिरामा रामास्तारामोरमयतांवरो रमयामासेतिअन्यत्रापि। तवमनोऽनुसारेणैवाहं सर्वंकरोमीति जानकींप्रति श्रीरामवचनाच्च। अथ मुमुक्षूणांतद्दर्शनोपायं निर्दिशन् तस्ययोगारूढ मुनींद्रमानसविहारित्वमाह। योगारूढेति। योगारूढं श्रीरामविषयक प्रेमैक भक्तियोगैक निष्ठं यन्मुनींद्राणां कुमारनारदादीनां मानसंमनस्तदेवसरः सरोवरस्तस्मिन्हंसाय हंसवत्कृत सुखविहारायेत्यर्थः। संसारः स्वभक्त्युन्मुखानां प्राणिनां विषयवासनातस्य विध्वंसायछेदकाय। स्फुरद्दीप्यमानमोजस्तच्छेदन[2] वलंयस्यसतस्मै। ईदृशस्यदु-

---

टि० (१) इथंवैयर्थ्यापत्तिः प्रमदागुणवाक्यं नजहाति ऋनेइति तद्वाक्य तात्पर्य्यतस्य नारदस्यवाक्यस्य तात्पर्य्यवर्णनात्इतीति किंताभिः सहरामः रासादिकं कृतवानिति।

(२) विषयवासना तच्छेदार्थः तच्छेदनावलं तस्याः विषयवासनायाः छेदनकर्तावलम्।

लंभत्वमाह । रघुकुलोत्तंसायेति । तच्छिरोभूषणायेत्यर्थः ॥ ५४ ॥

भवोद्भवंवेदविदोवरिष्ठमादित्यचंद्रानिलसुप्रभावम्
सर्वात्मकंसर्वगतस्वरूपंनमामिरामंतमसःपरस्तात्॥

अथतत्परमैश्वर्य्यमुद्दिशन् प्रणमति । भवोद्भवमिति रामंनमामि ॥ कीदृशम् । भवत्यस्माज्जगदितिभवः प्रधानंतस्याप्युद्भवोयस्मात्स भवोद्भवस्तं सर्वोपादानमित्यर्थः । तमः शब्दितसूक्ष्माचिच्छरीरात् श्रीरामात् प्रधानादेः प्रपंचस्योत्पत्तिरितिप्रागेवोक्तमस्माभिः । तस्मा द्वाएतस्मादात्मनआकाशः संभूतः । आकाशाद्वायुः । वायोस्तेजः तेजसआपोऽद्भ्यः पृथिवी पृथिव्या औषधयइत्यादिश्रुतेः । तमःशरीरा दात्मनः । श्रीरामात्प्रधानं संभूतं प्रधानशरीरात्तस्मादाकाशः संभूतः एवमग्रेऽग्रेपिज्ञेयम् । अन्यथात्मनिविकारित्वापत्तिः स्यात् । तत्तेजोऽसृजदित्यादिश्रुतेश्च । तमः शरीरंब्रह्मप्रधानमसृजत्प्रधान शरीरं तदाकाशंवायुश्चसृष्ट्वावायुद्वारा तेजोऽसृजदित्यर्थः । प्रदर्शिततयोर्द्वयोः श्रुत्योरेकवाक्यतोपपत्तये । आत्मनआकाशः संभूत इत्युक्तयोराकाश वाय्योर्गुणोपसंहार न्यायेनात्रोपसंहारात् ॥ अन्यथैतयोः श्रुत्योः परस्परंविरुद्धार्थ कत्वेन विरोधापत्तिः स्यात् ॥ तस्यजगन्निमित्त कारणत्वमाह ॥ वेदविदोवरिष्ठमिति ॥ वेदविदोविधेरपिवरिष्ठम् ॥ श्रीरामानुग्रहाद्ब्रह्मणो जगत्स्रष्टृत्वमित्यर्थः ॥ आदित्येति ॥ आदित्यादिषुशोभनः प्रभावोयस्यसतम् ॥ यदनुग्रहात्तेजगदधिकारिणइत्यर्थः ( यस्य-अनुग्रहात् तेआदित्यादयः जगतः अधिकारिणः स्युः ) ॥ सर्वात्मकम् सर्वे आत्मनोदेहायस्यतम् ( सर्वेआत्मनः जीवाः देहाः शरीराः यस्य श्रीरामस्यसः सर्वात्मकः तम् ) ॥ सर्वांतर्यामिणम् ॥ यआत्मनितिष्ठन् आत्मांतरो य मात्मा नवेदयस्यात्मा शरीरमिति ॥ यस्तमसितिष्ठन् तमोऽतरोयं तमोनवेदयस्यतमः शरीरमिति ॥ यः पृथिव्यांतिष्ठन् पृथिव्यंतरोयंपृथिवी न वेदयस्य पृथिवी शरीरमिति योऽक्षरेतितिष्ठन्

अक्षरांतरोयमक्षरं नवेदयस्याक्षरं शरीरमिति ॥ योऽक्षरमंतरेयमयति ( यमयति प्रेरयति ) सते आत्मामृत इत्येवाद्यंतर्यामि श्रुतिभ्यः । जगत्सर्वं शरीरंते इतिमहर्षिवचनाच्च ॥ सर्वगतस्वरूपमिति ॥ सर्वगतं सर्वव्यापि स्वरूपं यस्यसतथोक्तस्तम् ॥ अंतर्वहिश्चजगद्व्याप्यस्थितमित्यर्थः ॥ यत्किंचिज्जगत्सर्वंदृश्यते श्रूयतेऽपिवा ॥ अंतर्वहिश्चतत्सर्वं व्याप्यनारायणः स्थितः ॥ इति श्रुतेः ॥ तमसः परस्तात् प्रकृतेः परम्। विशेष्येण स्वरूपेण नित्यविभूतिस्थमित्यर्थः ॥ द्विहस्तमेकवक्त्रं स्वरूपमाद्यमिदंहरेः॥ परंतु द्विभुजंप्रोक्तमिति पंचरात्रोक्तम् । यदादिस्वरूपम् । इतिरामपदेनासौ परब्रह्माभिधीयते । इतिश्रुत्यासत्यानन्दचिदार्थकरामपदाभिधेयत्वेनोक्तम् । परब्रह्मेतिवेदेषु वेदांतेषुचाद्वितीयत्वेन स्वसमाभ्यधिकरहितत्वेन श्रुतमेकंनारायण मत्स्यादिवहुरूपधारित्वेन नारायणंजगन्नाथमित्यादिभिर्नारायणादिपदैर्विशेषितम् । तदेवनिरंजननिराकाराद्वैततमः परादिविशेषणैर्विशेषितं परात्परतरंतत्वंसत्यानंदचिदात्मकं रघूत्तमत्वेनाविर्भूतम् । पुनः सर्वेषांत्वंपरब्रह्मत्वन्मयं सर्वमेवहि । त्वमक्षरंपरंज्योति त्वमेवपुरुषोत्तमः । त्वमेवतारकंब्रह्मत्वत्तोन्यन्नैवकिंचनेत्युपसंहारेपि परब्रह्माक्षरपरंज्योतिः पुरुषोत्तमादिपदैर्विशेषितत्वेन सर्वेषां विशेष्यभूतं यत्सत्यानंदचिदार्थकरामपदवाच्यंपरब्रह्मपरमतत्वमिति वेदांतेषुगीतम् । द्विभुजः कुण्डलीरत्नमालीधीरोधनुर्धरः । इतिश्रुत्युक्तंयद्रूपंतेनैव विशेष्यरूपेण नित्यविभूतिस्थमित्यर्थः । यत्सर्वैर्विष्णुमहाविष्णु नारायणवासुदेव हरि मत्स्यकूर्म वाराह नृसिंहकृष्णादिनामभिर्निरंजन निरवद्य निराभास निराकार नित्यानंदाद्वैततमः परपरमतत्वाक्षरपरज्योतिः पुरुषोत्तमतारकब्रह्म परब्रह्मादि वेदवेदांतादिसारभूतैः पदैर्विशेषणभूतैर्विशेषितंभवति ॥ तदेवविशेष्यरूपंभवितुमर्हति नतदन्यदितिदृश्यतेचास्मिन्स्तवराजेनारायणंजगन्नाथमित्यादिभिः (तदेवतःस्वरूपमेव विशेषरूपं श्रीरामस्य विशेष्यस्य स्वरूपंभवितुमर्हति न तदन्यत तस्मात् रामरूपात अन्यत नारायणादिरूपंविशेष्यरूपं भवितुंनार्हति) ॥ परात्परंयस्परमं पवित्रं

नमामिरामंमहतोमहांतम् । राजीवलोचनंरामं प्रणमामिजगत्पतिम् । इत्येतैः परतत्वपरैः पदैर्विशेषितो राजीवलोचनोरामो व्यासवाल्मीक्यादीनां गुरुणा नारदेन । सएवरामः सर्ववाच्यस्यवाचक इतितापिनीयश्रुत्यापिसर्वशब्दवाच्यत्वेनोक्तः । सर्वेषांनारायणादिशब्दानांवाच्योरामस्तस्य वाचको राममंत्र इतिसर्व शब्देभ्यः षडक्षरस्य पृथगुक्त्यातस्यराममुख्यवाचकत्वंज्ञापितम् ॥ सर्वेषांनारायणादि शब्दानां वाच्यत्वेनतस्यनारायणादि रूपित्वेन विशेष्यरूपत्वंच । तथैवस्मृतिरप्याह । विश्वरूपस्यतेरामविश्वेशब्दाहिवाचकाः । तथापि मूलमंत्रस्तेसर्वेषांबीजमक्षयम् ॥ १ ॥ इति । विश्वेसर्वे नारायणादयो रूपाणियस्यसविश्वरूपस्तस्य तेतवसर्वे नारायणादयः शब्दावाचकाः । तथापिमूलमंत्रः षडक्षरः सर्वेषांनारायणादि शब्दानां ते तववाचकानांबीज कारणम् । अंकुरोत्पत्तौ बीजविनाशमाशंक्याह । अक्षयमिति। एवंश्रुति स्मृतिभिर्यद्रामस्य सर्वशब्दवाच्यत्वमुक्तं तदेवनारदेन नारायणादि पदैः रामंविशेष्य । रामस्यनारायणादि सर्वशब्दवाच्यत्वेन सर्वरूपितया सर्वकारणत्वं निबोध्य । निदानंप्रकृतेःपरम् । अद्वैतंतमसः परम् । नमामिरामं तमसःपरस्तात् । इतितस्यपुनः पुनः प्रकृतिपरत्वज्ञापनेनत्रिपादविभूतिस्वामित्वं तत्स्थत्वंच दृढीकृत्य । परात्परतरं तत्वं सत्यानंदंचिदात्मकं रघूत्तममित्यनेनतस्यैवात्राविर्भाववत्वंचदृढीकृतं भवतीत्यवगंतव्यम् । ५५ ॥

निरंजनं निःप्रतिमं निरीहं निराश्रयं निष्कलमप्रपंचम् । नित्यंध्रुवं निर्विषयस्वरूपं निरंतरं राममहंभजामि ॥ ५६ ॥

स्वरूपनिष्ठं स्वभावमुद्दिशन्प्रणमति । निरंजनमित्यादिना। अज्यतेऽनेनेत्यंजनमज्ञानम् । तन्निर्गतंयस्मात्सनिरंजनस्तम् । शुद्धंचिदेकरसमितियावत् । निष्कलं निष्क्रियंशांतं निरवद्यंनिरंजनमिति श्रुत्यु-

कम् ॥ निःप्रतिमम् । प्रतिमाउपमाअप्रतिमप्रभावः इतिवचनात् । निर्गताप्रतिमाउपमायस्मात्सतथोक्तस्तंनिरुपममित्यर्थः । नतस्यप्रतिमाऽस्तियस्यनाममहद्यशः । इतिश्रुत्युक्तम् । सर्वेषुमंत्रवर्गेषुश्रेष्ठंवैष्णवमुच्यते । गाणपत्येषु शैवेषु शाक्तसौरेष्वभीष्टदम् ॥ १ ॥ वैष्णवेष्वपिमंत्रेषु राममन्त्राः फलाधिकाः । गाणपत्यादिमंत्रेषु कोटिकोटिगुणाधिकाः ॥ २ ॥ मंत्रस्तेष्वप्यनायासफलदोयंषडक्षरः। षडक्षरसमोमंत्रो जगत्स्वपिनविद्यते । ३ । जपतःसर्ववेदांश्चसर्वमन्त्रांश्चपार्वति । तस्मात्कोटिगुणंपुण्यं रामनाम्नैवलभ्यते ॥ ४ ॥ इत्येवमादिषु नामान्तरयशोभ्यः गाणपत्यशैव शाक्तसौरवैष्णवनाममंत्रयशोभ्यः कोटिगुणाधिक्यंश्रूयतेश्रीरामनामयशसोऽतोमहद्यशो नामरामेदुमेवभवतिश्रुत्युक्तम् । तेनश्रुत्युक्तोनिः प्रतिमोरामस्तम् ॥ निरुपमत्वात् । नतस्समश्चाभ्यधिकश्चदृश्यते । परास्यशक्तिर्विविधैवश्रूयते । नतस्यकश्चित्पतिरस्तिलोके नचेशितानैवच तस्यलिंगम्॥ सकारणं कारणकरणाधिपाधिपोनचास्यकश्चिज्जनितानचाधिपः ॥ १ ॥ इत्यादिकारणपरश्रुतीनांसर्वासां तस्यैकस्यैव बोधकमुपपद्यते । सर्वेषांकारणवाक्यगतानां शब्दानां सर्वशाखाप्रत्ययन्यायेनैकस्मिन्परमकारणे पर्य्यवसानत्वस्य युक्तत्वात् । मूलकारणत्वस्यद्विनिष्ठत्वानुपपत्तेश्च । निरीहम् ॥ पुरुषार्थप्रापकचेष्टारहितम् । तस्यस्वतः (तस्यपुरुषार्थस्य अर्थधर्मकाममोक्षाख्यस्य) सिद्धेरित्यर्थः । सर्वचेष्टारहितमितितु नार्थस्तत्रजडत्वापत्तेः । निराश्रयम् । निराधारंस्वमहिमाधारमित्यर्थः । सभगवःकस्मिन्प्रतिष्ठितः (भगवो हेभगवन् सः ईश्वरः कस्मिन्प्रतिष्ठितः छन्दसिभगवन् पदस्थाने भगवोभवति) ॥ इतिप्रश्नं प्रतिस्वमहिम्नीतिश्रुतेः । निष्कलम्।कलाःकालावयवास्तेभ्योनिर्गतंकालाऽनाधीनस्वरूपमित्यर्थः कलामुहूर्तादिमयश्चकालोनयद्विभूतेः । परिणामहेतुः । इतिस्मृतेः ॥ ज्ञःकालकालोगुणीति ॥ तस्यकालस्यापिकालत्वश्रवणात् ॥ अप्रपंचम् ॥ प्रपंचयतिभृत्यसेवामितिप्रपंचस्तादृशोनभवतीत्यप्रपंचस्तम् ॥ स्वल्पयापिसेवयातुष्यंतमितिभावः ॥ तदुक्तम् ॥ कथंचिदुपकारेण

कृतेनैकेनतुष्यति ॥ नस्मरत्यपकाराणांशतमप्यात्मवत्तया ॥ १ ॥ इति अथवा ॥ अप्रपंचम् ॥ प्रपंचादन्यंतद्धर्मरहितमित्यर्थः ( तस्यप्रपंचस्यसंसारस्यधर्मरहितम् ) ॥ नित्यम् ॥ त्रिकालैकरसम् ॥ ध्रुवम् ॥ अचलंविभुत्वात् ॥ निर्विषयस्वरूपम् ॥ प्राकृतविषयव्यासंगशून्यं स्वरूपं यस्यतम् ॥ निरंतरम् ॥ स्वभक्तविच्छेद वर्जितंभक्तजनैकप्रियमित्यर्थः ॥ रामम् ॥ योगिचित्तविश्रामस्थानमित्यर्थः ॥ ५६ ॥

भवाब्धिपोतंभरताग्रजंतं भक्तप्रियंभानुकुलप्रदीपम्। भूतत्रिनाथं भुवनाधिपत्यंभजामिरामं भवरोगवैद्यम् ॥ ५७ ॥

भवाब्धीति ॥ तंरामंभजामीत्यन्वयः ॥ कीदृशम् ॥ भवाब्धिपोतम् ॥ भवाब्धेः संसारसिंधोः पोतंनावंतारकमित्यर्थः । भरताग्रजमिति ॥ भरताग्रजंतज्ज्येष्ठं तद्भक्तिविषयमितियावत् ॥ नकेवलंतस्यैवभक्तिविषयमपितुतत्प्रियत्वाकांक्षिणा मन्येषामपीत्याह ॥ भक्तप्रियमिति ॥ भक्तिमन्तःप्रियायस्येत्यर्थः ॥ तदुक्तम् ॥ अहंभक्तपराधीनोह्यस्वतंत्रइवद्विज ॥ साधुभिर्ग्रस्तहृदयोभक्तैर्भक्तजनप्रियः ॥ १ ॥ साधवोहृदयंमह्यंसाधूनांहृदयंत्वहम् ॥ मदन्यंतेनजानंतिनाहंतेभ्योमनागपि ॥ २ ॥ मयिनिर्बद्धहृदयाः साधवःसमदर्शिनः ॥ वशीकुर्वंतिमांभक्त्यासत्स्त्रियः सत्पतिंतथा ॥ ३ ॥ नाहमात्मानमाशासेमद्भक्तैः साधुभिर्विना ॥ श्रियंचात्यंतकींब्रह्मन्येषांगतिरहंपरा ॥ ४ ॥ येदारागारपुत्राप्तान्प्राणान् वित्तमिमंपरम् ॥ हित्वामांशरणंयाताः कथंतांस्त्यक्तुमुत्सहे ॥५॥ इमंलोकं तथैवामुमात्मानमुभयायिनम्॥ आत्मानमनुयेचेहरायोवेपशवोगृहाः ॥ ६ ॥ विसृज्यसर्वानन्यांश्चमामेव विश्वतोमुखम् ॥ भजंत्यनन्यया भक्त्या तान्मृत्योरतिपारये॥ ७ ॥ मत्सेवयाप्रतीतंच सालोक्यादिचतुष्टयम् ॥ नेच्छंतिसेवयापूर्णाः किमन्य त्कालविप्लुतम् ॥ ८ ॥ इत्येवमादि ॥ सुरोऽसुरोवाप्यथवानरोऽनरः

सर्वात्मनायः सुकृतज्ञमीश्वरम् ॥ भजेतरामंमनुजाकृतिंहरिं य उत्तरा-
ननयत्कोशलान्दिवम् ॥ ६ ॥ नजन्मनूनंमहतोनसौभगंनवाङ् नबुद्धि-
र्नाकृतिस्तोषहेतुः ॥ तैर्यद्विसृष्टानपि नोवनौकसश्चकार सख्येवतल-
क्ष्मणाग्रजः ॥ १० ॥ इत्यत्रनोत्तमकुलजन्मादिःप्रियोरामस्य ॥ अपितु-
निकृष्टकुलजातस्यापि तद्भक्तिरेवेतिस्फुटमुक्तंभवति । भानुकुलप्रदीपम्।
सूर्य्यवंशस्यप्रकृष्टंदीपम् । सौर्य्यवीर्य्यादिभिः प्रकाशमानस्यापिसूर्य्य-
वंशस्यातिमानुष सौर्य्यवीर्य्यादिभिरत्यंतप्रकाशकमित्यर्थः ॥ भूतत्रि-
नाथम् ॥ भूतानांप्राणिनांत्रिषु कालेषुनाथं स्वामिनंसर्वदातद्रक्षकमि-
त्यर्थः ॥ तत्रहेतुः ॥ भुवनाधिपत्यमिति ॥ भुवनेष्वाधिपत्यंस्वामित्वं-
यस्यतम् ॥ सर्वेश्वरमित्यर्थः ॥ अत्ररामस्य भुवनाधिपतित्वोक्त्यैव ब्र-
ह्माद्यधिपतित्वमुक्तंभवति ॥ एषसर्वेश्वरः एषभूतपालः ॥ इत्यादिश्रुतेः
भवरोगस्यसंसारदुःखस्य वैद्यंविनाशकम् ॥ भवाब्धिपोतमित्यनेनवि-
द्यमानात् ॥ संसारात्पारंनयतीत्युक्तम् ॥ भवरोगवैद्यमिति यथासौ
पुनर्नप्रतीयेत् ( असौसंसारःपुनः नप्रतीयेत्नभवेत् ) तथातत्संबंध-
स्यापि विनाशकमुक्तमितिविवेकः ॥ ५७ ॥

**सर्वाधिपत्यंसमरंगधीरंसत्यंचिदानंदमयंस्वरू-
पम् । सत्यंशिवंशांतिमयंशरण्यं सनातनंराममहं
भजामि ॥ ५८ ॥**

टि० (१) यः रामः उत्तरान्कोशलान् उत्तरकोशलदेशभवान् प्रजान्-
दिवंपरमंपदमनयत्प्रापयत् द्वौकोशलदेशौउत्तरकोशलो
दक्षिणकोशलश्च तत्रदक्षिणकोशलाद्भवा कौशल्यातस्मिन्नेव
दक्षिणकोशलदेशेभवानाग्नजिति नाग्नजितराज्ञः कन्यायाः
श्रीकृष्णेनविवाहिता अतोयेपंडितमानिनो वदंतिश्रीकृष्णः
श्रीअयोध्यायांविवाहितः तेत्वत्यंताऽज्ञाः ॥

भुवनशब्दस्याऽर्थाघशिष्टस्यार्थयमेवस्वामीत्याह ॥ सर्वाधिपत्यमिति ॥ सर्वेषुत्रिपाद्विभूतिपर्य्यंतेष्वाधिपत्यंस्वामित्वंयस्यतम् ॥ अस्यपदस्यायमेवार्थः ॥ नतुब्रह्मादिप्रभुत्वरूपोभुवनाधिपत्यमित्यनेनैव श्रीरामस्यसर्वभुवनतद्गत ब्रह्माद्यधिपतित्वस्योक्तत्वात् ॥ समरंगधीरमिति ॥ समशब्दोऽत्रसर्वशब्दपर्य्यायः ॥ समेषुसर्वेषुरंगेषुसमरविलासनर्माऽऽहवदानरूपेषुकौतुकेषुधीरंनिपुणम् ॥ इतिश्रीरललितधीरोदात्तधीरोद्धतधीरशांतभावः श्रीरघुनाथस्योद्दिष्टोभवति ॥ सत्यमिति ॥ सर्वदाऽवाधितस्वरूपत्वम् ॥ चिदानन्दमयस्वरूपरूपम्। स्वस्मैस्वयमेवप्रकाशमानं सुखमयंचस्वरूपंयस्यतम् ॥ सत्यमिति ॥ कारणावस्थत्वेकार्य्यावस्थत्वेच तात्त्विकमित्यर्थः ॥ शिवम् ॥ मंगलात्मकम् ॥ यदातमस्तन्नदिवानरात्रिर्नसन्नचासच्छिवएवकेवलः ॥ इत्येवमादिश्वेताश्वतरादिकारण वाक्यगतशिवादिशब्दवाच्यम् ॥ कुतइदमवगम्यतेइतिचेत् ॥ तत्रैवश्वेताश्वतरोपनिषदि ॥ नतस्यप्रतिमास्ति यस्यनाममहद्यशः ॥ इतिमहद्यशस्वन्नामवतोऽनुपमत्वश्रवणेनस्वसमाभ्यधिक रहितत्वोपपत्त्यापरम कारणत्वोपपत्तेः ॥ ततश्चसर्वशाखाप्रत्ययन्यायेन कारणवाक्यगतानां सर्वेषांशिवादि शब्दानामेकस्मिन्परमकारणे पर्य्यवसानस्ययुक्तत्वात् ॥ मूलकारणत्वस्य द्विनिष्ठत्वानुपपत्तेश्च रामनाम्नोयशसस्तु ॥ गाणपत्यशैवशाक्तसौरवैष्णवमंत्रेभ्यः कोटिगुणाधिक्यश्रवणात् ॥ महद्यशस्त्वरामनाम वाच्यस्यैवानुपमत्वेन स्वसमाभ्यधिकरहिततया परमकारणनिष्पत्यातदन्येषां परमकारणत्वानुपपत्त्या चतत्रैवपरमकारणे उक्तन्यायेन ( उक्तन्यायेन सर्वशाखाप्रत्ययन्यायेन ) सर्वेषांकारणवाक्यगतानां विष्णुनारायणवासुदेवहरिशिवमहेश्वरमहादेवादि शब्दानांपर्य्यवसानस्ययुक्तत्वात् ॥ मूलकारणत्वस्यद्विनिष्ठत्वानुपपत्त्या तदन्यस्यतदनुपपत्तेश्चेत्येवं सर्वेषांकारणवाक्यगतानांशब्दानाम्॥वेदपुराणादिपठितानां श्रीरामाख्ये परेब्रह्मणिपर्य्यवसानत्वं यथानिष्पद्यते तथासुष्ठूपपादितमस्माभिः श्रीरामतापिनीयवृहद्भाष्ये ॥ इतितत्रैवद्रष्टव्यमत्रग्रंथविस्तारभयात्र-

लिख्यते ॥ शांतिमयमिति ॥ क्षोभरहितं राज्यभ्रष्टेपिसुमुखत्वोक्तेः ॥ अतएवशरण्यम् ॥ कृतमहापराधस्यशत्रोरप्याश्रितस्याभयप्रदम् ॥ यदाहस्वयमेव ॥ आर्तोवायदिवाद्दप्तः परेषांशरणंगतः ॥ अरिःप्राणान्परित्यज्यरक्षितव्यःकृतात्मना ॥ १ ॥ इति ॥ आनयैनंहरिश्रेष्ठदत्तमस्याभयंमया ॥ विभीषणोवासुग्रीवोयदिवारावणःस्वयम् ॥ २ ॥ सकृदेवप्रपन्नाय तवास्मीतिचयाचते। अभयंसर्वभूतेभ्योददाम्येतद्व्रतंमम ।३ ॥ इति ॥ सनातनम् ॥ अनादिम् ॥रामम् । योगिचित्तविश्रामस्थानम। रमंतेयोगिनोऽनंतेसत्यानन्देचिदात्मनि ॥ इतिरामपदेनासौपरब्रह्माभिधीयते ॥ १ ॥ इतिश्रुतेः ॥ अत्रसनातनंराममित्यनयोः ॥ अनादिरामम् ॥ अनादिसत्यानन्द चिदार्थकरामपदवाच्यत्वेनानादिरामनामकम् नतुलीलाविभूत्याविर्भावानंतरं प्राप्तरामनामकमित्यंतात्पर्य्यः ॥ रामनाम्नोऽनादित्वंतु॥मननात्त्राणनान्मंत्रःसर्ववाच्यस्यवाचकइतीयं श्रुतिः सर्वशब्दवाच्यस्य ब्रह्मणोमुख्यवाचकत्वेनज्ञापयति ॥ तन्मुख्यवाचकत्वं तुराममंत्रस्यशर्वशब्देभ्यः पृथगुक्त्यावगम्यते ॥ मंत्रोऽन्वर्थादिसंज्ञकः ॥ सर्वेऽर्थाअनुगतायस्यां साअन्वर्थाईदृशी आदिसंज्ञासर्वाभ्यो विष्णुनारायण वासुदेवहर्य्यादिसंज्ञाभ्यः ॥ आदिपूर्वसिद्धारामेति संज्ञायस्मिन्मंत्रे सोऽन्वर्थादिसंज्ञकः षडक्षरोमंत्रइत्यर्थः ॥ इतिश्रुतिस्तुस्फुटं रामनाम्नआदिसंज्ञत्वंवदति ॥ विश्वरूपस्यतेरामविश्वेशब्दाहिवाचकाः ॥ तथापिमूलमंत्रस्तेविश्वेषांवीजमक्षयम् ॥ १॥ इतिस्मृतिस्तुसर्वशब्दाक्षयवीजत्वेन (सर्वेषांशब्दानामक्षयश्चासौवीजः सर्वशब्दाक्षयवीजस्तस्यभावोवीजत्वंतेन ) रामनाम्नोऽनादित्वंज्ञापयति ॥ स्वभूर्ज्योतिर्मयोनंतरूपीस्वेनैवभाषते ॥ रेफारूढामूर्त्तयःस्युः शक्तयस्तिस्रएवच ॥ ब्रह्मात्मकाः सच्चिदानंदाख्याइत्युपासितव्यम् ॥ इत्येवमाद्याः श्रुतयस्तुश्रीरामनाम्नः षडक्षरस्यचस्वप्रकाश ब्रह्मस्वरूपभूतत्वेनानादित्वेवोधयंति ॥ ५८ ॥

———

कार्य्यक्रियाकारणमप्रमेयं कविपुराणं कमलायताक्षम् ॥ कुमारवेद्यं करुणामयंतं कल्पद्रुमंराममहंभजामि ॥ ५९ ॥

तत्सनातनत्वं विशदयति । कार्य्येति । कार्य्यंजगत्तस्यक्रियानिर्मितिस्तस्याः कारणंहेतुम् ॥ सतपोऽतप्यतसतपस्तप्त्वा इदं सर्वमसृजत । यदिदंकिंचनेतिश्रुतेः ॥ तस्यदुर्बोध्यरचनस्यजगतः कारणस्याचिंत्यज्ञानशक्त्यादिमत्वमाह ॥ अप्रमेयमिति ॥ अपरिच्छेद्यस्वरूपरूपगुण ज्ञानशक्त्यादिकमित्यर्थः ॥ पूर्वसृष्टिसदृशोत्तरजगन्निर्माणत्वेहेतुद्वयम् ॥ कविमितिपुराणमिति च ॥ कविं सर्वज्ञंपुराणंसनातनम् ॥ स्वरूपतन्नेत्रासक्तिंदर्शयति ॥ कमलायताक्षमिति ॥ कमलवत्प्रसन्ने आयते कर्णपर्य्यंतदीर्घे अक्षिणीयस्यतम् ॥ कुमारवेद्यम् ॥ सनकादिधेयम् । ननुसनकादिध्येयस्य कथमस्मद्ध्यानगम्यत्वमित्याशंक्याह करुणामयमिति ॥ करुणामयत्वाद्भक्तमात्रध्यानगम्यमित्यर्थः ॥ एतदेवस्फुटयति कल्पद्रुममिति ॥ कल्पद्रुमवदुत्तमध्यमनिकृष्टानांसर्वेषांभक्तानां मनोरथपूरकमित्यर्थः ॥ तंराममहंभजामि ॥ उक्तार्थमन्यत् ॥५९

त्रैलोक्यनाथं सरसीरुहाक्षंदयानिधिंद्वंद्वविनाशहेतुम् । महाबलंवेदनिधिंसुरेशंसनातनंराममहंभजामि ॥ ६० ॥

त्रैलोक्यनाथमिति ॥ लोकत्रयस्वामिनम् ॥ सरसीरुहाक्षमिति ॥ कमलायताक्षं सरसीरुहाक्षमितिपुनः पुनः कथनेनस्वस्य श्रीरामनयनारविंदरसिकत्वंबोधयति ॥ दयानिधिम् ॥ अपारदयम् ॥द्वंद्वविनाशहेतुम् ॥ द्वंद्वानांशीतोष्णादीनां संसारधर्माणांविनाशहेतुम् ॥ स्वभक्तशीतोष्णादिनिवर्त्तकमित्यर्थः ॥ महाबलम् ॥ असंख्येयपराक्रमम् ॥

तवाहस्वयमेव ॥ सुदुष्टोवाप्यदुष्टोवा किमेषरजनीचरः ॥ सूक्ष्ममप्य-हितंकर्तुं ममशक्तः कथंचन ॥ १ ॥ पिशाचान्दानवान्यक्षान्पृथिव्यांये-चराक्षसाः ॥ अंगुल्यग्रेणतान्हंन्यामिच्छन्हरिगणेश्वर ॥ २ ॥ इत्यादि॥ वेदनिधिम् ॥ वेदाश्रयभूतम् ॥ वेदमर्य्यादाप्रतिपालकम् ॥ प्रलयेतद्रक्ष-कंवेत्यर्थः ॥ सुरेशम् ॥ देवदेवम् ॥ तंदेवतानां परमंचदैवतमित्यादि श्रुतम् । अस्मिन्प्रकरणे । भूतत्रिनाथं सर्वाधिपत्यं त्रैलोक्यनाथमिती-दृशपदानां पुनरुक्तया श्रीरामस्यविभूतिद्वयस्वामित्वंनिर्बोध्य ॥ सना-तनंराममहंभजामीत्यस्यपुनः पुनरुक्तया श्रीरामस्यस्वेष्टदेवतात्वंज्ञाप-यति ॥ कमलायताक्षं सरसीरुहाक्षमितीदृशानां पुनः पुनरुक्तयास्वस्य-तन्मुखारविंद रसिकत्वंकरुणामयंदयानिधिमितीदृशानां पुनः पुनरु-क्तयातस्यातिकारुणिकत्वेनस्वाभीष्टपूरकत्वं रामंतमसः परस्तादि-त्यस्य पुनः पुनरुक्तयाश्रीरामस्यत्रिपाद विभूतिस्वामित्वं सनातनंराम मित्यस्य पुनः पुनरुक्तयाद्विभुजाद्याकृतिमतएवरामस्यानादित्वंप्रका-शयति ॥ एवमग्रेपि ॥ वेदांतवेद्यम् ॥ अशेषवेदात्मकमित्यादि पदांतरे-ष्वपियथायोग्यमूह्यम् ॥ ६० ॥

## वेदांतवेद्यं कविमीशितारमनादिमध्यांत मचिं-त्यमाद्यम् । अगोचरं निर्मलमेकरूपंनमामिरामं-तमसः परस्तात् ॥ ६१ ॥

तंत्वौपनिषदं पुरुषंपृच्छामः ॥ नावेदविन्मनुतेतंबृहंतमित्येव-मादिश्रुत्युक्तं तस्योपनिषदेकवेद्यत्वमाह । वेदांतवेद्यमिति ॥ सर्वोप-निषत्प्रतिपाद्यम् । निरपेक्षस्वरूपतया ( निर्गता अपेक्षायस्यसः निर-पेक्षः स्वरूपोयस्यसः निरपेक्षस्वरूपः तस्यभावः निरपेक्षस्वरूपता-तया निरपेक्षस्वरूपतया ) ॥ श्रीरामतापिनीयश्रुत्या सहान्यासांछां-दोग्याद्युपनिषदामेकवाक्यतयोक्तत्वात् । अतएवसर्वोपनिषत्कारण वाक्यगत ब्रह्म, परब्रह्म, तत्सदक्षरपुरुष विष्णु महाविष्णु नारायण

वासुदेवहरिशिवमहेश्वर रुद्रेशाननिरंजन निराकारादि शब्दवाच्यम् ॥ इममेवाभिप्रायं ज्ञापयितुं श्रीनारदेनव्यासगुरुणा नारायणंजगन्नाथमित्यारभ्यस्तवराजसमाप्तिपर्य्यंतेन श्रीरामस्यनारायण वासुदेवहरिब्रह्म, परब्रह्माक्षर परज्योतिः पुरुषोत्तमनिरंजननिराकार तमः परादि शब्दवाच्यत्वमुक्तम्। व्यासेनापिस्तवराजस्यसर्ववेदसारत्वमुक्तंश्रीनारदोक्तम् सर्वंदृढीकृतश्चेतितत्रहेतूनाह॥ ईशितारमित्यादीन्॥ यतईशितासर्वनियंतासर्वेश्वरअतएवसर्वोपनिषत्कारणवाक्यगतब्रह्मपरब्रह्मादिशब्दवाच्योरामएवैकोनान्यः परब्रह्मत्वस्यसर्वेशितृत्वस्यचद्विनिष्ठत्वानुपपत्तेः। श्रुतयः स्मृतयश्चैवयुक्तयश्चेश्वरंपरम् वदंतितद्विरुद्धंयो वदेत्तस्मान्नचाधमः ॥ १ ॥ इतिपद्मपुराणवचनाच्च । अतएव ॥ अनादिमध्यांतम् ॥ आदिमध्यावसानशून्यम् । अतएव स्वसदृशद्वितीयाभावेनानुपमत्वादचिंत्यम् । ईदृशरामस्यरूपादिकमिति चिंतितुमशक्यम्॥ अतिविलक्षणरूपादिकमित्यर्थः । यद्वातर्काऽगोचरम् ॥ नैषामतिस्तर्केणापनेया(प्रोक्तान्येनसुविज्ञानायप्रेष्ठेतिश्रुतेः)। अस्यार्थः ॥ हेप्रेष्ठअन्येनगुरुणासुविज्ञानायप्रोक्ता कथिता एषामतिर्बुद्धिस्तर्केण न अपनेया नदूरीकरणीयेत्यर्थः ॥ तर्काप्रतिष्ठानादितिसूत्राच्च ( तर्कस्यअप्रतिष्ठानात् स्थित्यभावात्) ॥ किंतुगुरूपदेशगम्यम् ॥ आचार्य्यवान्पुरुषोवेदेतिश्रुतेः ॥ वेदांतवेद्यादिषुहेतुः ॥ आद्यमिति ॥ सर्वेभ्यः पूर्वसिद्धंपरमकारणमित्यर्थः ॥ द्विहस्तमेकवक्त्रं, अरूपमाद्यमिवंहरेरिति ॥ परंतु द्विभुजंप्रोक्तमितिच पंचरात्रवचनात् ॥ अगोचरम् ॥ प्राकृतेन्द्रियाऽप्राह्यम् । नचक्षुषापश्यति रूपमस्येति ॥ यन्मनोनमनुते ॥ यद्वाचानभ्युदितम् । यतोवाचोनिवर्तंते अप्राप्यमनसासहेत्येवमादिश्रुतिभ्यः ॥ किंतुभक्तिग्राह्यमेव ॥ मनसातुविशुद्धेनाभिक्लप्तइति ॥ दृश्यतेत्वग्रयाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिः ॥ इत्येवमादिश्रुतिभ्यः ॥ निर्मलम् ॥ प्रकृतिलेपरहितम् ॥ अतएव ॥ एकरूपम् ॥ सदैवषोडशवार्षिकावस्थम् ॥ बालाद्यवस्थाग्रहणस्य तत्तद्भक्तेच्छानुरूपत्वात् ॥ तमसः परस्तात् ॥ नित्यविभूतिस्थं ॥ रामम् ॥ नित्यमुक्तजोवरमयितारं नमामि ॥ कविमित्युक्तार्थम् ॥ ६१ ॥

अशेषवेदात्मकमादिसंज्ञमजंहरिं विष्णुमनंत मूर्त्तिम् ॥ अपारसंवित्सुखमेकरूपं परात्परंराममहंभजामि ॥ ६२ ॥

अशेषेति ॥ नकेवलमुपनिषन्मात्रवेद्यंकिंतु ॥ अशेषवेदात्मकम् । अशेषेषुकृत्स्नेषुवेदेष्वात्मास्वरूपंयस्यतम् ॥ सर्ववेदवेद्यमित्यर्थः ॥ सर्ववेदायत्पदमामनंति तद्विष्णोःपरमंपदमितिश्रुतेः ॥ विष्णोर्व्यापनशीलस्य ॥ पद्यतेगम्यतेइतिपदंपरमंस्वरूपमित्यर्थः ॥ वेदमूर्तिकमितिवा ॥ रामस्यविष्णुपरमस्वरूपत्वेहेतुः ॥ आदिसंज्ञकम्॥ आदिःप्रथमासर्वेभ्यः सर्वभगवन्नामभ्यश्च पूर्वसिद्धारामेत्याख्यायस्यतम् ॥ मंत्रोऽन्वर्थादिसंज्ञकः ॥ सर्ववाच्यस्यवाचक इतिश्रुत्यारामनाम्न आदिसंज्ञत्वं परब्रह्ममुख्यवाचकत्वोक्तेः ॥ विश्वरूपस्यतेरामविश्वेशब्दाहिवाचकाः ॥ तथापिरामनामेदंविश्वेषांबीजमक्षयम् ॥ १ ॥ इतिपद्मपुराणेतस्यसर्वशब्दबीजोक्त्या सर्वादित्वनिष्पत्तेः ॥ विष्ण्वादिनाम्नांव्यापकादिगुणकर्मद्वारापरब्रह्मवाचकत्वनिष्पत्तेः ॥ रामनाम्नःसच्चिदानंदपरब्रह्मस्वरूपसाक्षाद्वाचकत्वाच्च ॥ विष्ण्वाद्यनेकसहस्रनाम[1] समरामपदवाच्यस्यानेकसहस्रविष्णु समत्वोपत्त्याविष्ण्वंशित्वेन[2] विष्णुपरस्वरूपत्वोपपत्तेः ॥ अजम् ॥ जन्माख्यविकारशून्यम् ॥ दशरथाज्जन्मत्वाविर्भावाभिप्रायकमित्यदोषः ॥ उपलक्षणमिदम् ॥ अस्तिजायतेवर्द्धतेविपरिणमतेअपक्षीयतेविनश्यतिइत्येषांशून्यत्वस्यषड्विधिविका-

---

टि० (१) विष्ण्वंशित्वेनविष्णोरंशित्वेनविष्णुः श्रीरामचन्द्रस्य अंश अवतारः श्रीरामचन्द्रस्तुविष्णोरंशीअवतारीतस्यभावः विष्ण्वंशित्वंतेन ।

(२) श्रीदशरथात्जन्मतुआविर्भावाभिप्रायकं नतुगर्भस्थितादिना जन्मदोषइत्यदोषः ॥

शून्यमित्यर्थः ॥ हरिम् ॥ भक्तदुःखहरम् ॥ आश्रयार्हमित्यर्थः ॥ सर्वा-वतारिणंवा ॥ अवताराह्यसंख्याताहरेः सत्वनिधेर्द्विजाः ॥ यथाविदासिनःकुल्याः सरसःस्युःसहस्रशः ॥ १ ॥ इतिभागवतेउक्तस्य कारणवाक्यगतस्यहरिशब्दस्य वाच्यमित्यर्थः ॥ विष्णुम् ॥ स्वरूपतोगुणतश्चसर्वव्यापकम् ॥ ततःप्रतिष्ठितोविष्णुः स्वर्गेलोकेयथापुरा ॥ येनव्याप्तमिदंसर्वं त्रैलोक्यंसचराचरम् ॥२॥ इतिमहर्षिवचनात् ॥ अनंतमूर्त्तिम् ॥ अनंताअपरिच्छिन्नामूर्तिर्यस्यतम् ॥ बहुषुध्यातृषुयौगपद्येनाविर्भावात् ॥ यद्वा ॥ अनंताअसंख्यातामूर्त्तयोयस्यतम् ॥ रामस्यैवकलांशाद्वैह्यवताराभवंतिहि ॥ कोटिकोटिश्चकार्य्यार्थेसिंधौवीचीववैमुने ॥ १ ॥ वासुदेवादिमूर्त्तीनांचतुर्णांकारणंपरम् ॥ चतुर्विंशतिमूर्त्तीनामाश्रयःशरणंमम ॥ सर्वावताररूपेणदर्शनस्पर्शनादिभिः ॥ दीनानुद्धरतेयोऽसौसरामःशरणंमम ॥ ३ ॥ इतिपंचरात्रोक्तेः ॥ स्वभूर्ज्योतिर्मयोऽनंतरूपीस्वेनैवभासते ॥ इतिरामतापिनीयश्रुतेः ॥ अनंतानिरूपाणिमूर्त्तयोविद्यंते यस्यसोऽनंतरूपी ॥ अत्ररूपशब्दोविग्रहवाची ॥ मत्स्यकूर्मवराहादिरूपधारिणमव्ययम् ॥ इतिवचनात् ॥ तस्यापारज्ञानानन्दगुणकत्त्वमाह ॥ अपारसंवित्सुखमिति ॥ अपारेपूर्णेसंवित्सुखेज्ञानानंदौयस्यतम् ॥ पूर्णज्ञानानन्दधर्मकमित्यर्थम् ॥ एकरूपम् ॥ एकंमुख्यंसर्वपरंद्विभुजादि मद्रूपंयस्यतम् ॥ स्थूलमष्टभुजंप्रोक्तं सूक्ष्मंचैवचतुर्भुजम् ॥ परन्तुद्विभुजंप्रोक्तं तस्मादेतत्त्रयंयजेत् ॥ १॥ इतिपंचरात्रेपरस्वरूपस्यद्विभुजत्वोक्तेः ॥ पुनस्तत्रैव ॥ द्विहस्तमेकवक्त्रं चशुद्धस्फटिकसंनिभम् ॥ मरीचिमण्डलेसंस्थंरूपमाद्यमिदंहरेः ॥ २ ॥ इतिद्विभुजस्यैवादिरूपत्वोक्तेश्च ॥ अगोचरंनिर्मलमेकरूपमित्यत्र ॥ एकरूपम् सदैकरसमित्येवंव्याख्यातत्वात् । अत्रैकरूपंसदैकरसमित्युक्तौ पुनरुक्तिदोषापत्तिरनिवार्य्यापूर्वोक्तेपुसर्वत्रहेतुः ॥ परात्परमिति ॥ सर्वोत्कृष्टम् ॥ परात्परंयन्महतोमहांतम् ॥ यस्मात्परंनापरमस्तिकिंचित् ॥ यस्मान्नाणीयोनज्यायोस्तिकिंचित् ॥ नतत्समश्चाभ्यधिकश्चदृश्यते ॥ इत्येवमादिश्रुतिभिः स्वसमाभ्यधिकरहितत्वेन प्रतिपादितमित्यर्थः ॥

एवंभूतंराममहंभजामि ॥ ६२ ॥

तत्वस्वरूपंपुरुषंपुराणं स्वतेजसापूरितविश्व- मेकम् ॥ राजाधिराजंरविमण्डलस्थंविश्वेश्वरंरा- ममहंभजामि ॥ ६३ ॥

श्रीरामस्यपरात्परत्वमुत्तरोत्तरवाक्यैर्द्रढ़यति ॥ तत्वस्वरूप- मिति ॥ यत्परंयद्गुणातीतं यज्ज्योतिरमलंशिवम् ॥ तदेवपरमंतत्वं- कैवल्यपदकारणम् ॥ १ ॥ इत्युपक्रमोक्तंतत्वंपरमार्थभूतममलंशिवंज्यो तिः स्वरूपंयस्यतम् ॥ ज्योतिर्मयंराममहंभजामीतिवक्ष्यतिच ॥ पुरु- षम् ॥ पूःषुवसीतिपुरुषस्तम् ॥ सर्वांतर्निवासिनम् ॥ वृक्षइवदिवितिष्ठ- त्येकस्तेनेदंपूर्णंपुरुषेणसर्वमिति ॥ वेदाहमेतंपुरुषंमहांतमादित्यवर्णं- तमसःपरस्तात् ॥ तमेवविदित्वातिमृत्युमेति (जीवस्तमेवपुरुषंविदि- त्वामृत्युं अतिअतिक्रम्यतंपुरुषंप्रतिप्राप्नोति ) नान्यःपन्थाविद्यतेऽय- नाय ॥ १ ॥ अंगुष्ठमात्रःपुरुषोमध्ये आत्मनितिष्ठति ॥ ईशानोभूतभ- व्यस्यनततो विजुगुप्सते ( ततः तस्मात्पुरुषात् नविजुगुप्सतेनगुप्तंव- र्तते ) इत्येवमादिश्रुतिभिः ॥ सर्वांतर्निवासित्वेन तमसःपरतयापर- विभूतिस्थत्वेन ॥ अंगष्ठमात्रपुरुषइति पुरुषाकारत्वेनप्रतिपादितम् ॥ पुरुषाकाऐच्छिकइतिचेत्तत्राह ॥ पुराणमिति ॥ सनातनपुरुषाकार- मित्यर्थः ॥ परन्तुद्विभुजंप्रोक्तमिति ॥ द्विहस्तमेकवक्त्रं च रूपमाद्यमिदं- हरेः ॥ इतिपंचरात्रेपरविग्रहस्यद्विभुजोक्तयापुरुषाकारत्वोपपत्तेः ॥ स्व- तेजसापूरितविश्वमिति ॥ स्वतेजसानिजप्रभावेणपूरितंविश्वंयेनतम् ॥ नियमितविश्वमित्यर्थः ॥ अथवा ॥ सहस्रकोटि वह्नीन्दुलक्षकोट्यर्क- संनिभम् ॥ मरीचिमण्डलेसंस्थं रूपमाद्यमिदंहरेः ॥ १ ॥ इतिपंचरात्रो- क्तेः ॥ रविमण्डलस्थस्यस्वतेजसापूरितविश्वम् ॥ सूर्य्यद्वाराप्रका- शितविश्वमित्यर्थः ॥ ननुसूर्य्यादयोपिविश्वप्रकाशकाः श्रूयंतेइत्याशं- क्याह ॥ एकम् ॥ मुख्यंस्वसमाभ्यधिकरहितम् ॥ सूर्य्यादयस्तुतत्त-

प्रकाशेनप्रकाशकइत्यर्थः ॥ तदेवस्फुटयति ॥ राजाधिराजमिति ॥ राजंतेप्रकाशंतेइतिराजानः सूर्य्यादयस्तेषामधिराजम् ॥ तेषांप्रकाशकमित्यर्थः ॥ तदेवस्फुटयति ॥ रविमण्डलस्थमिति ॥ द्विहस्तमेकवक्त्रं च लक्षकोट्यर्क संनिभम् । मरीचिमण्डलेसंस्थंरूपमाद्यमिदंहरेः ॥ १ ॥ इतिपंचरात्रोक्तेः । सूर्यमण्डलमध्यस्थं रामंसीतासमन्वितम् । इत्यत्रत्योक्तेश्च । रविविंवांतः स्थंद्विभुजस्व प्रकाशज्योतिः स्वरूपमित्यर्थः ।एतेनतत्सवितुर्वरेण्यंभर्गइतिगायत्रीप्रतिपादितत्वं रामस्यज्ञापितंभवति । तत्रवरेण्यंश्रेष्ठं भर्गस्तेजः । तदुक्तमाग्नेयेगायत्रीव्याख्याने।यज्ज्योतिः परमंब्रह्मभर्गस्तेजोयतःस्मृतः । भर्गःस्याद्भ्राजतइति वहुलंछंदसीरितम् (भर्गइत्यत्रदीर्घाभावश्छंदसि) । वरेण्यंसर्वतेजोभ्यः श्रेष्ठंतेजः समीरितिमिति । विश्वेश्वरमिति । धियोयोनः प्रचोदयादिति । गायत्र्युक्तप्रकारेण विश्वांतर्वर्तिसर्वप्राणि बुद्धिप्रेरकमित्यर्थः । एवंभूतंगायत्रीप्रतिपादितं राममहंधीमहीति गायत्रीपदस्यवक्तव्येछंदोभंगभयाद्भजामीत्युक्तम् ॥ ६३ ॥

**लोकाभिरामं रघुवंशनाथं हरिंचिदानंदमयंमुकुंदम् । अशेषविद्याधिपतिं कवींद्रं नमामिरामं तमसः परस्तात् ॥ ६४ ॥**

लोकाभिराममिति । लोकसुन्दरमभिरामेण वपुषालोकानामानन्दप्रदमित्यर्थः । नमोऽस्तुरामदेवाय जगदानन्दरूपिणे । इतिपूर्वोक्तेः रघुवंशनाथम् । रघुवंशश्रेष्ठम् । हरिम् । रूपौदार्य्यगुणैः पुंसांदृष्टिचित्तापहारकम् । चिदानंदमयमिति । चिच्चासावानंदमयश्च चिदानंदमयः । नीलमुत्पलं नीलगुणकमुत्पलमितिवत् । आनंदस्वरूपकचित्स्वरूपइत्यर्थः । तंचिदानंदमयम् । मुकुन्दम् । मुक्तिदातारम् । अशेष विद्याधिपतिम् ॥ सर्वविद्याप्रवर्तकम् । तदुक्तंगांधर्व्येचभुविश्रेष्ठोवभूवभरताग्रजः । इति । उपलक्षणंह्येतत्सर्वविद्याश्रेष्ठत्वस्य । कवींद्रम्

सर्वज्ञचूडामणिम् । तमसः परस्तात् परविभूतिस्थरामम् । सच्चिदानंदार्थकरामपदवाच्यंनमामि ॥ ६४ ॥

योगींद्रसंघैः शतसेव्यमानं नारायणं निर्मलमादिदेवम् । नतोस्मिनित्यं जगदेकनाथमादित्यवर्णंतमसः परस्तात् ॥ ६५ ॥

योगींद्रेति। योगींद्राणांसंघायूथास्तैः शतेनप्रकारेणसेव्यमानम् । स्वस्वपरंपरारीत्यास्वस्वभावनानुसारेणचानेकधासेव्यमानमित्यर्थः। यद्यपिसेव्यमानपदं शतशब्देन समस्तं (समस्तंसमासंप्रातम्)तथापि योगींद्रसन्घैरित्थनेनसंबंधमाकांक्षति । समस्तस्यासमस्तेन नित्याकांक्षेण संगरिरित्युक्तेः (समस्तस्यसमासंप्राप्तस्यपदस्यअसमस्तेननसमासं प्राप्तेननित्यं आकांक्षेणसंगतिः स्यात्) । नन्वेकरामस्यकथंशतधासेव्यमानत्वमित्यपेक्षायामाह नारायणमिति । नराज्जातानितत्वानि नाराणीतिविदुर्बुधाः तस्यतान्ययनं पूर्वंतेननारायणः स्मृतः ॥ १ ॥ इतिस्मार्तनिरुक्तेः । सर्वान्तर्गतं भावुकानां तत्तद्भावनानुसारेण युगपदाविर्भावन्तमित्यर्थः । सर्वान्तर्गतत्वेपि तत्तद्दोषाऽस्पृशत्वम् । स्वभक्तदोषनिवर्तकत्वमाह । निर्मलमिति । स्वयंप्रकृतिलेपरहितम् । स्वभक्तमायामलनिवर्तकमित्यर्थः । आदिदेवम् । सर्वेषांदेवानामादिभूतम्। अतएवजगदेकनाथम् । जगतोमुख्यस्वामिनम् । आदित्यवर्णम् । स्वप्रकाशस्वरूपम् । तमसःपरस्तात् । तमःशब्दवाच्यसूक्ष्मप्रकृतेः परस्तात् । प्रकृतिमण्डलात्परस्तात् । त्रिपाद्विभूतौस्थितमित्यर्थः । अत्र तमसः परस्तादित्यस्य पदस्यप्रकृतिलेपरहितमितितुनार्थः । एतद्वाक्यस्थनिर्मलमितिपदेन पुनरुक्तिदोषापत्तेः । एवंभूतंरामंनित्यंनतोऽस्मीति। नित्यनमस्कारोक्त्याश्रीरामस्यसर्वोपास्यत्वंज्ञापयामास ॥ ६५ ॥

विभूतिदं विश्वसृजं विराजं राजेन्द्रमीशं रघु-

वंशनाथम् । अचिंत्यमव्यक्तमनंतमूर्तिं ज्योतिर्मयंराममहं भजामि ॥ ६६ ॥

विभूतिदमिति । कर्मानुरूपफलप्रदमित्यर्थः । विश्वसृजम् । जगन्निमित्तकारणम् । विराजम् । विराडंतर्यामिणम् । तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतेः॥ विशेषेणराजमानमितिवा ॥ यतोराजेंद्रम् ॥ नकेवलंराज्ञामेवेन्द्रत्वंतस्यकिंतु सर्वेषांदेवादीनामपीत्याह॥ ईशमिति ॥ ब्रह्मादीनांनियंतारमित्यर्थः ॥ तस्यसुलभत्वंसुसेव्यत्वंचाह ॥ रघुवंशनाथमिति ॥ तस्यसुलभत्वेतद्रूपलावण्यादेरियत्तारा हित्येनेदमित्थमेवेतिज्ञातुमशक्यमित्याह ॥ अचिंत्यम् ॥ इदं तद्रूपादिकमित्थमेवेति चिंतितुमशक्यम् ॥ तत्रहेतुः ॥ अव्यक्तमिति ॥ प्राकृतेंद्रियाग्राह्यम् ॥ नचक्षुषापश्यतिरूपमस्येतिश्रुतेः ॥ दृश्यतेत्वग्रयाबुद्धयेति श्रुतेर्दिव्येंद्रियदृश्यत्वेपि कार्त्स्न्येनादृश्यमित्यर्थः ॥ अनंतमूर्त्तिम् ॥ अनंताअपरिछिन्नामूर्त्तिर्यस्यतम् । विभिन्नदेशेषु बहुधुध्यातृषुयुगपदाविर्भावात् ज्योतिर्मयम् ॥ स्वप्रकाशरूपम् ॥ यत्परंयद्गुणातीतं यज्ज्योतिरमलंशिवम् ॥ तदेवपरमंतत्वं कैवल्यपदकारणम् ॥ १ ॥ इत्युपक्रमोक्तम् ॥ एषः ( संप्रसादोमुक्तोजीवएषः ) संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरूपंसंपद्यस्वेन रूपेणाभिनिष्पद्यते ॥ इतिश्रुत्युक्तमुक्तजीवप्राप्यभूतपरस्वरूपमित्यर्थः ॥ एवंभूतंराममहंभजामि ॥ अत्रप्रकरणेराममहंभजामिराममहंभजामीति॥ पुनःपुनरभ्यासेन(अभ्यासोवारंवारकथनम्) रामस्यसर्वोपास्यत्वंदृढयति ॥ ६६ ॥

अशेषसंसारविकार हीनमादिस्तुसंपूर्णसुखाभिरामम् ॥ समस्तसाक्षीतमसः परस्तान्नारायणंविष्णुमहंभजामि ॥ ६७ ॥

तदेवस्फुटयति ॥ अशेषेत्यादिना ॥ अशेषैःकृत्स्नैःसंसारविकारैः ॥ गर्भजन्मवृद्धिविपरिणत्यपक्षयजरामरणादिभीरहितम् ॥ आदिरिति ॥ यतआदिः ॥ सर्वेभ्यःपूर्वसिद्धं परमकारणमितियावत् ॥ अत्राऽम्विभक्तेःसुरादेशः ॥ सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल इतिपाणिनिस्मृतेः ॥ आदिंसुसंपूर्णसुखाभिराममितिपाठेसुगमम् ॥ सुसंपूर्णेनसुखेनाभिरामम् ॥ बहुविचित्रनृत्यगीतादिविशिष्टशृंगारानंदसुंदरमित्यर्थः ॥ नचेदृशस्येतराऽनवधानमित्याह ॥ समस्तसाक्षीति ॥ समस्तचिदचिद्वस्तुसाक्षाद्द्रष्टा॥ पूर्ववदमःसुरादेशःतमसःपरस्तात् तमसःप्रधानादिकारणभूतायाः सूक्ष्मप्रकृतेःपरस्तात्प्रसंगतम्। परस्यांत्रिपादविभूतौस्थितम् ॥ नित्यविभूतिस्थितंसंतंसमस्तवस्तुसाक्षाद्द्रष्टारमित्यर्थः ॥ नकेवलंसमस्तसाक्षीकिंतुजगत्सृष्टिद्वारातत्कारणमपीत्याह ॥ नारायणमिति ॥ क्षीराब्धिशयनद्वारा जगदुत्पादकमित्यर्थः ॥ तथैवोक्तंभागवते॥ जगृहेपौरुषंरूपंभगवान्महदादिभिः ॥ संभूतंषोडशकलमादौलोकसिसृक्षया ॥ १ ॥ यस्यांभसिशयानस्ययोगनिद्रामुपेयुषः ॥ नाभिहृदांबुजादासीद्ब्रह्मालोकपितामहः ॥ २ ॥ यस्यावयवसंस्थानैः कल्पितोलोकविस्तरः ॥ यस्यांशांशेनसंभूतादेवतिर्य्यङ्नरादयः ॥ ३ ॥ इत्यादिना ॥ नकेवलंजगदुत्पादकः किंतुसर्वव्यापकत्वेन सर्वांतर्यामितयासर्वनियंतृत्वात्सर्वेषांतत्तत्पूर्वकर्मानुसारेणतत्तत्कर्मसुप्रवर्तकः ॥ इत्याहविष्णुमिति ॥ सर्वव्यापकम् ॥ नतु जगत्पालकोविष्णुरत्रविवक्षितस्तस्य ब्रह्माविष्णुश्चरुद्रश्चेत्यग्रेविभूतिमध्येवक्ष्यमाणात् ॥ अतएवंभूतंराममहंभजामि ॥ अत्रश्रीस्तवराजे निदानंप्रकृतेःपरम् ॥ १ ॥ अद्वैतंतमसःपरमितिच ॥ २ ॥ सर्वात्मकंसर्वगतस्वरूपंनमामिरामंतमसः परस्तादितिच ॥ ३ ॥ अगोचरंनिर्मलमेकरूपं नमामिरामंतमसःपरस्तादितिच ॥ ४ ॥ अशेषविद्याधिपतिंकवींद्रंनमामिरामंतमसः परस्तादितिच ॥ ५ ॥ नतोस्मिनित्यंजगदेकनाथमादित्यवर्णं तमसःपरस्तादितिच ॥ ६ ॥ समस्तसाक्षीतमसः परस्तान्नारायणं विष्णुमहंभजामिचेति ॥ ७ ॥ तमसःपरस्तादितिपद-

स्यपुनःपुनरभ्यासेन श्रीरामनिष्ठत्रिपादविभूतिस्थत्वस्य दृढीकरणत्वेन तस्यपरस्वरूपत्वंदृढीकृतंभवति ॥ पंचरात्रेपिद्विभुजस्यैव परस्वरूपत्वमुक्तम् ॥ स्थूलमष्टभुजंप्रोक्तंसूक्ष्मंचैवचतुर्भुजम् ॥ परंतुद्विभुजंप्रोक्तं तस्मादेतत्त्रयंयजेत् ॥ १ ॥ इति ॥ द्विहस्तमेकवक्त्रंचरूपमाद्यमिदंहरेरितिव ॥ उपपद्यतेच विष्णवनेकसहस्रनामतुल्यस्य सर्ववेदसर्वमंत्रजपपुण्यकोटिगुणाधिकपुण्यप्रदरामनामवाच्यस्यैवपरस्वरूपत्वम् ॥ नान्यस्यरामनामन्यूनपुण्यदनामवाच्यस्यकस्यापि ॥ अन्यथेदृशरामनामकथनस्यवैयर्थ्यापत्तेः ॥ तस्मात्सच्चिदानन्दार्थराम पदवाच्यंपरस्वरूपंज्ञेयम् ॥ व्यूहाःसंकर्षणादयः ॥ विभवानृसिंहादयः (धर्मपुत्रनारायणादयइत्यपिक्वचिद्दृश्यतेपाठः) ॥ अन्तर्यामीविष्णुनारायणवासुदेवशब्दवाच्यः ॥ विष्णुनारायणवासुदेवशब्दानांव्यापकत्वपर्यवसानात् ॥ अर्चाशालग्रामादयः ॥ तएतेसर्वेरामस्यावताराः सोपासककार्य्यार्थंतदुद्धारार्थंचेत्याह ॥ तत्रैवपंचरात्रे ॥ वासुदेवादिमूर्तीनां चतुर्णांकारणंपरम् । चतुर्विंशतिमूर्त्तीनामाश्रयः शरणंमम ॥ १ ॥ सर्वावताररूपेणदर्शनस्पर्शनादिभिः ॥ दीनानुद्धरतेयस्तुसरामःशरणंमम ॥२॥ महद्गुणानामाधारोरहितःप्राकृतैर्गुणैः॥एषसर्वस्यविधृतिर्हेतूश्रुत्वा प्रकीर्त्तितः (महद्गुणानामाधारः प्रकृतैःरहितश्च इतिद्वौहेतूश्रुत्वाएव श्रीरामचन्द्रःसर्वस्यजगतोविधृतिः आधारःप्रकीर्त्तितः)॥३॥इतितस्यशरणागतिः॥ मंत्रषडक्षरोऽष्टाक्षरश्चेत्याह ॥ तत्रैव ( पंचरात्रे ) महिमामंत्रराजस्य साक्षाद्गिरिजापतिः॥ जानातिभगवाञ्छंभुर्ज्वलत्पावकलोचनः ॥१ ॥ चतुर्थीदीयतेचात्रतादर्थ्येकमलोद्भव ॥ अभ्येतितेनमामेवसंत्यज्यान्यत्प्रयोजनम् ॥ साधनांतरसन्त्यागोनमः शब्दोहिशंसति ॥ अनेनशरणापत्तिः परमैकांतिनांमता ॥ २ ॥ इति ( इत्यादिस्मृतिभिः षडक्षरःप्रोक्तः)॥ अष्टाक्षरस्तु ॥ श्रीरामःशरणंममेत्येषतत्रैव शरणागतिस्तोत्रेउक्तोवाल्मीकीये ॥ शरणागतिनिर्णय वाक्यसमूहांते श्रीरामेणोक्तम् ॥ सकृदेवप्रपन्नाय तवास्मीतिचयाचते ॥ इतीदंचरमवाक्यमपितच्छरणागतिमंत्रोस्ति ॥ तदेतन्मंत्रत्रयंरहस्यत्रयमुच्यते

तज्ज्ञैर्बुधैरितिज्ञातव्यम् ॥ श्रीरामशरणागतैस्तदेकोपायोपेयैरिति ।६७।

मुनीन्द्रगुह्यं परिपूर्णमेकं कलानिधिकल्मषनाश-हेतुम् ॥ परात्परंयत्परमंपवित्रं नमामिरामंमहतो-महांतम् ॥ ६८ ॥

नन्वेवंचेत्तर्हिसर्वेपिमुनयोद्विभुजमेव रामंमूलतत्त्वंनित्यविभूति स्वामित्वंसर्वावतारित्वंचस्फुटं किंनवदंतीत्यपेक्षायामाह ॥ मुनींद्रगुह्यमिति ॥ मुनींद्राणांमुनीश्वराणामपि गुह्यंतैर्गोप्यंगोपनीयंतद्ब्रह्मस्वरूपम् ॥ अतस्तैस्तस्यतत्स्फुटंनोच्यंते ॥ अतस्तस्यतत्वंनसर्वेजानंति ॥ किंतुकश्चिदेवतदनुगृहीतइत्यर्थः ॥ तदुक्तंवाल्मीकीये ॥ त्वांहिलोकगतिर्वीरनत्वांजानंतिकेचन ॥ ऋतेमायांविशालाक्षींतव पूर्णपरिग्रहाम् ॥ १ ॥ इति ॥ श्वेताश्वतरश्रुतिरप्याह ॥ तद्वेदगुह्योपनिषत्सुगूढंतद्ब्रह्मावेदतेब्रह्मयोनिम् ॥ येपूर्वंदेवाऋषयश्च तद्विदुस्तेतन्मया अमृतावैबभूवुः ॥ २ ॥ परिपूर्णम् ॥ स्वयंरूपमित्यर्थः ॥ तदेवस्फुटयति ॥ एकमिति ॥ मुख्यमद्वितीयम् ॥ स्वसमाभ्यधिकरहितमित्यर्थः ॥ अतएवकलानिधिम् ॥ कलाविभूतयोनिजांशास्तासामाश्रयभूतम् ॥ रामस्यैवकलांशाद्वैअवताराभवंतिहि ॥ कोटिकोटिश्चकार्य्यार्थे सिंधौवीचीववैमुने ॥ १ ॥ इतिस्मरणात् ॥ उपासकानांकार्य्यार्थं ब्रह्मणोरूपकल्पनेत्यादितापनीयश्रुतेश्च ॥ कल्मषनाशहेतुम् ॥ संसारहेतुभूतसर्वपापनाशकारणम् ॥ तत्रहेतुः ॥ यत्परमंपवित्रमिति ॥ स्मृतमात्रंसदविद्यापर्य्यंतंमलंयद्वस्तु निरस्यतितदात्मकमित्यर्थः (यद्वस्तुअपरिछिन्नचित् स्मृतमात्रंसत्सन् अविद्यापर्य्यंतंमलंनिरस्यतितदात्मकंतत् अपरिछिन्नचित्स्वरूपआत्मायस्यसतदात्मकस्तम्)॥ परात्परम्। सर्वोत्कृष्टम् ॥ महतोमहांतम् ॥ महतोपिदिगाकाशादेः पदार्थान्महांतं, परमहत्वगुणमित्यर्थः ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलम् ॥ इतिपुरुषसूक्तात् ॥ भूमिमित्युपलक्षणंप्रकृत्यादीनाम् ॥ एवंभूतंराम-

भजामि ॥ ६८ ॥

ब्रह्माविष्णुश्चरुद्रश्चदेवेन्द्रोदेवतास्तथा ॥
आदित्यादिग्रहाश्चैवत्वमेवरघुनंदन ॥ ६९ ॥

एवंमाधुर्य्यैश्वर्य्यादिगुणवैशिष्ट्येन श्रीरामंस्तुत्वा ॥ इदानीं-ब्रह्मादीनां तद्विभूतित्वंनिर्दिशन्स्वेतरनिखिलवैशिष्ट्येनाद्वितीयत्वं तस्यनिरूपयन्स्तौति ब्रह्माविष्णुरित्यादिभिः हेरघुनंदनरघुवंशेष्वानं-दवर्द्धन ॥ ब्रह्माचतुर्मुखोजगत्स्रष्टाविष्णुः क्षीराब्धिपतिर्जगत्पाल-कोरुद्रश्चतत्संहर्त्ता देवेन्द्रःशचीपतिः ॥ देवताःवाय्वादयः॥ आदित्या-दिग्रहाश्चसूर्य्यचन्द्रमंगलबुधवृहस्पति शुक्रशनिराहुकेतवइत्येते नव-ग्रहास्त्वमेव ॥ एतेसर्वेत्वद्विशेषणभूतास्तत्तद्विशिष्टास्त्वत्तोनातिरि-च्यंते ॥ यथादंडिनःपुरुषाद्दंडस्य भेदोनास्तिदंडस्यदंडकोटिप्रविष्ट-त्वात् नचतेनकेवलमद्वैतमाशंकनीयम् ॥ विशेषणविशेष्ययोर्दण्डपुरु-षयोः स्वरूपधर्मकृतभेदस्यानिवार्य्यत्वात् ॥ तस्माद्विशिष्टाद्वैतमेवा-त्रोपपद्यते ॥ ६९ ॥

तापसाऋषयःसिद्धाः साध्याश्चमरुतस्तथा ॥
विप्रावेदास्तथायज्ञाः पुराणंधर्मसंहिताः ॥७०॥

तापसाः तपस्विन ऋषयोदुर्वासोविश्वामित्रप्रमुखाःसिद्धाःसा-ध्यश्चतत्तत्संज्ञका मरुतस्तन्नामकादेवाविप्रायज्ञानुष्ठातारः ॥ वेदा-यज्ञविधायिनयज्ञा ज्योतिष्टोमादयः ॥ पुराणंश्रीविष्णुपुराणादि धर्म-संहिताचशिष्ठादिस्मृतयः ॥ ७० ॥

वर्णाश्रमास्तथाधर्मावर्णाधर्मास्तथैवच ॥
यक्षराक्षसगंधर्वादिक्पालादिग्गजादिभिः ७१

वर्णाब्राह्मणादय आश्रमाब्रह्मचर्य्यादय धर्मा आश्रमधर्मा ॥ वर्णधर्मा ब्राह्मणादिवर्णानांधर्माःयक्षाश्च राक्षसाश्चगंधर्वाश्चदिग्गजादिभिः सहिताःदिक्पालाश्च ॥ ७१ ॥

सनकादिमुनिश्रेष्ठास्त्वमेवरघुपुंगव ॥
वसवोऽष्टौत्रयःकालारुद्रा एकादशस्मृताः ॥७२॥

सनकादयोमुनिश्रेष्ठास्त्वमेव ॥ त्रयः कालाभूतवर्तमानभविष्यदाख्याः ॥ ७२ ॥

तारकादशदिक्चैवत्वमेवरघुनंदन ॥
सप्तद्वीपाःसमुद्राश्चनागानद्यस्तथाद्रुमाः ॥७३॥

तारकाःअश्विन्यादीनिनक्षत्राणि चतस्रोदिशश्चतस्रोविदिशश्चेत्यष्टौ उर्ध्वमधश्चेतिदशदिशस्त्वमेव ॥ द्वीपाःसप्तसमुद्राश्च सप्त नागावासुक्यादयः ॥ नगाइतिपाठे ॥ सुमेरुप्रभृतयोगिरयः ॥ नद्योगंगाद्याद्रुमाःपारिजातादयः पिप्पलादयश्च ॥ ७३ ॥

स्थावराजंगमाश्चैव त्वमेवरघुनायक ॥
देवतिर्य्यग्मनुष्याणां दानवानांतथैवच ॥७४॥

मुख्यानुक्तान्यान् संगृह्णाति ॥ स्थावरा इत्यर्द्धेन ॥ हेरघुनायक उक्तानुक्तमेतत्सर्वंत्वमेव ॥ ७४ ॥

मातापिता तथा भ्राता त्वमेवरघुवल्लभ ॥
सर्वेषांत्वंपरब्रह्मत्वन्मयं सर्वमेवहि ॥ ७५ ॥

अत्रब्रह्माविष्णुश्च रुद्रश्चदेवेंद्रोदेवतास्तथेति नारदेनब्रह्मरुद्रसहचारिणोजगत्पालकस्य विष्णोरपिश्रीरामविभूतिमध्येगणनात् ॥ पुनः

सर्वांशत्वंपरब्रह्मेतिरामस्य ब्रह्मादि सर्वव्यापकत्वोक्त्यातन्मध्यगतस्य विष्णोरपितद्व्यापकत्वोपलक्षिततदंशत्वोपपत्तेश्च । मुख्यत्वाद्विश्वश्री-जत्वात्तत्कत्वान्महेश्वर ॥ त्वदंशैःस्वीकृतंरामह्यस्माभिर्नामतेत्रिभिः॥ भार्गवोऽयंपुराभूत्वा स्वीचक्रेनामतेविधिः ॥ विष्णुर्दाशरथिर्भूत्वास्वी करोत्यधुनाप्रभुः ॥ २ ॥ संकर्षणस्तथाचाहं स्वीकरिष्यामिशाश्वतम् ॥ इतिस्कंदपुराणे शिवेनश्रीरामंप्रतिविष्णोरपितदंशत्वोक्तेश्च ॥ विष्ण्व-नेकसहस्रनामतुल्यरामनामवाच्यस्यानेकसहस्रविष्णुतुल्यत्वोपपत्त्या श्रीरामस्यविष्ण्वंशित्वोपपत्तेः ॥ यतः श्रीरामांशभूतस्यविष्णोर्वाल्मी-कीयपाठिनः ॥ पंडितमानिनः श्रीरामावतारित्वं वदंतितन्नोपपद्यते ॥ नारदशिष्यस्य वाल्मीकेः ॥ नारदविरुद्धवादित्वानुपपत्तेः॥वाल्मीकीयो पक्रमस्यसंदिग्धत्वाच्च । संदिग्धोपक्रमस्यासंदिग्धोपसंहारवाक्यानु-सारेण।नेतव्यत्वाच्च संदिग्धंतु वाक्यशेषादिति ॥ संदिग्धमुपक्रमवा-क्यमसंदिग्धवाक्यशेषानुसारेण निर्णेतव्यमित्यर्थकात्जैमिनिसूत्राच्च॥ तद्यथा । इमामगृभ्णन्रशनामृतस्येति श्रुति संदिग्धार्थस्य ॥ इत्यश्वा-भिधानीमादत्ते॥ इतितद्वाक्यशेषेणनिर्णयवत् तथापशुनायजेतेतिश्रुति संदिग्धार्थस्य ॥ छागोवामंत्रवर्णात् ॥ छागस्यवपायांमेदसोऽनुब्रूहीति तद्वाक्यशेषेणनिर्णयवच्च॥ वाल्मीकीयेप्युपक्रमसंदिग्धार्थस्य ॥ रक्षांवि-धास्यन्भूतानांविष्णुत्वमुपजग्मिवान्॥ इत्यसंदिग्धतदुपसंहारवाक्या-नुरोधेननिर्णयत्वोपपत्त्यारामस्यैवविष्ण्वतारित्वोपपत्तेश्च ॥तथाहि ॥ वाल्मीकीयोपक्रमे॥ तस्यभार्यासुतिसृषुह्रीश्रीकीर्त्युपमासुच॥ विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विधम्॥ इतिदेवैः प्रार्थितोविष्णुः॥ एवं दत्वावरंदेवो देवानांविष्णुरात्मवान् ॥ मानुषेचिंतयामास जन्मभूमि-मथात्मनः ॥ १ ॥ इत्युक्तंमहर्षिणा ॥ एतद्वाक्यप्रमाणेनपण्डितारामस्यविष्ण्वतारत्वंमन्यंतेतन्नोपपद्येत ॥ अस्यवाक्यस्य संदिग्धार्थत्वात॥ कुतः । अत्रविष्णुरात्मवानिति श्रूयतेयतः ॥ आत्माविद्यतेयस्यसआ-त्मवान् ॥ सविष्णोरात्माकोऽस्तीतिसंदेहः ॥ आत्मादेहेधृतौजीवेस्व-भावेचपरात्मनि । इत्यनुशासनादात्मशब्दस्य देहादिपरत्वावगमात्॥

सभात्माशब्दोनात्रदेहपरः । विष्णोश्चतुर्भुजत्वप्रसिद्धेः ॥ युद्धप्रकरणाऽभावेन तस्यधृत्यर्थकत्वाऽनुपपत्त्या ततसात्विकस्वभावत्वप्रसिद्धेश्चात्मशब्दस्यदेहादिपरत्वाऽनुपपत्तेः ॥ परिशेषात्परमात्मपरत्वमवगम्यते ॥ तस्यत्वात्मशब्दस्यन विष्ण्वंतर्यामिपरत्वमुपपद्यते ॥ विष्णोर्जीवत्वाऽभावात् ॥ अतस्तात्पर्यानुपपत्तेस्तत्रत्यात्मपदस्य विष्णुकारणे लक्षणाकारणवान्विष्णुरित्यर्थः ( कारणवान् श्रीरामचन्द्रः कारणंविद्यतेयस्यस कारणवान् विष्णुः आत्मवान् विष्णु कारणवान् विष्णुरित्यर्थः ) ॥ प्रमाणंचात्र वाल्मीकीयोपसंहारे रामनिष्ठविष्णुकारणत्वबोधकं ब्रह्मवचनम् ॥ संक्षिप्यहिपुरालोकान्माययास्वयमेवहि ॥ महार्णवेशयानोऽप्सु मांत्वंपूर्वमजीजनः ॥ १ ॥ माययाजनयित्वात्वंद्वौचसत्वौमहाबली ॥ मधुंचकैटभंचैव ययोरस्थिचयैःकृताः ॥ इयंपर्वतसंबाधामेदिनीचाभवत्तदा ॥ २ ॥ पद्मेदिव्यार्कसंकाशेनाभ्यामुत्पाद्यमामपि ॥ प्राजापत्यंत्वयाकर्म मयिसर्वंनिवेदितम् ॥ ३ ॥ सोऽहंसन्यस्तभारोहि त्वामुपासेजगद्गुरुम्॥ रक्षांविधत्स्वभूतेषुममतेजस्करोभवान् ॥ ४ ॥ ततस्त्वमपिदुर्धर्षस्तस्माद्भावात्सनातनात् ॥ रक्षांविधास्यन्भूतानां विष्णुत्वमुपजग्मिवान् ॥ ५ ॥ सत्वंवित्रास्यमानासु प्रजासु जगतांवर । रावणस्यवधाकांक्षीमानुषेषुमनोदधाः ॥ ६ ॥ इत्यादिकम् ॥ तत्रमहार्णवेशयानोऽप्सु त्वमित्यनेन रामस्य क्षीराब्धिशायिनारायणरूपधारित्वेन तत्कारणत्वमुक्त्वा (तत्कारणत्वं तस्यनारायणस्य कारणंश्रीरामचन्द्रमुक्त्वा) ॥ विष्णु विष्णुत्वमुपजग्मिवानिति तस्य विष्णुरूपधारित्वेन विष्णुकारणत्वमुक्त्वाअनंतरं यस्त्वं महार्णवेशयानः सन्मामजीजनः यस्त्वंभूतानांरक्षार्थंविष्णुत्वमुपजग्मिवान् ॥ सत्वंरावणेनविष्ण्ववध्येन वित्रास्यमानासुप्रजासु रावणस्य वधाकांक्षीसन् मानुषेषुमनोदधाः ॥ इतिमनोधारणमात्रमुक्तम् ॥ नतुरामत्वं दाशरथित्वं वोपजग्मिवानित्युक्तम् ॥ अतोऽस्मिन्नवतारेऽजहत्स्वनित्याकृत्यैव सच्चिदानन्दार्थकरामपदवाच्यः ॥ परात्परोरामोऽत्राविर्भूतः । इतिमानुषेषुमनोदधा इति ब्रह्म

वचनात् ॥ इतिरामस्यरामाख्याभुवित्स्यादिति ॥ इतिरामपदेनासौ परब्रह्माभिधीयते इति श्रुतिभ्यांचावगम्यते । प्रादेवतदुपसंहारे रामस्यस्फुटं विष्णुकारणत्वोक्तेः ॥ तदविरोधेन संदिग्धंतदुपक्रमवाक्यं निर्णतव्यम् ॥ ततश्चआत्मवानितिपदस्य कारणवानित्यस्य लक्षकत्ववत् ॥ मानुषेषुमनोदधाः ॥ मानुषेचिंतयामास जन्मभूमिमथात्मनः । इत्यनयोर्द्वयोर्वाक्ययोः परस्परंविरुद्धार्थकत्वेनाप्रामाण्यापत्तेः ॥ जन्मभूमिमथात्मन इत्युक्तस्यात्मपदस्याप्यात्मकारणलक्षकत्वोपपत्तेः। एवंदत्वावरंदेवो देवानांविष्णुरात्मवान् ॥ मानुषेचिंतयामास जन्मभूमिमथात्मनः ॥ १ ॥ इत्यस्य । एवम् ॥ आत्मवान् कारणवान् विष्णुर्देवानां वरंदत्वामानुषे आत्मनः। आत्मकारणस्य रामाख्यस्यब्रह्मणो जन्मभूमिंचिंतयामासेत्यर्थकत्वोपपत्तेः ॥ वाल्मीकीयेपि श्रीरामस्यैवविष्णवतारित्वं निष्पद्यते ॥ यस्तुदाशरथिरामो विष्णुनारायणाद्यवतारत्वेनोक्तः पुराणादिषु सविष्णवतारोदाशरथिरामोऽस्मदुपास्यात्सच्चिदानन्दार्थकरामपदाभिहितात् परस्माद्ब्रह्मणोदाशरथेरन्योरामांशत्वेनोक्तस्यविष्णोरवतारत्वेनोक्तः ॥ स्कंदपुराणेश्रीरामंप्रतिशिवेन ॥ मुख्यत्वाद्विश्वबीजत्वात्तारकत्वान्महेश्वर ॥ त्वदंशैःस्वीकृतंरामह्यस्माभिर्नामतेत्रिभिः ॥ १ ॥ भार्गवोऽयंपुराभूत्वास्वीचक्रेनामतेविधिः ॥ विष्णुर्दाशरथिर्भूत्वास्वीकरोत्यधुनाप्रभो ॥ २ ॥ इत्यत्रत्वदंशैः स्वीकृतमितिरामाख्यपरब्रह्मदाशरथ्यंशत्वेनोक्तोयोविष्णुस्तदवतारभूतस्यदाशरथेर्नाम्नः स्वकारणभूतविष्णवनेक सहस्रनामतुल्यत्वं तदधिकत्वंचनोपपद्यते ॥ किंतुतन्न्यूनत्वमेव ॥ अवतारनाम्नोऽवतारिनाम्नोन्यूनत्वोपपत्तेः ( अवतारोरामोविष्णवतारभूतदाशरथिस्तस्य नाम्नोऽवतारीविष्णू रामाख्यपरब्रह्मदाशरथ्यंशभूतस्तस्यनाम्नोन्यूनत्वोपपत्तेः) सहस्रनामतातुल्यंरामनामवरानने॥ विष्णोरेकैकनामैवसर्ववेदाधिकंमतम्।ताद्वङ्नामसहस्रैस्तुरामनामसमंमतम्। जपतःसर्ववेदांश्चसर्वमंत्रांश्चपार्वति ॥ तस्मात्कोटिगुणंपुण्यंरामनाम्नैवलभ्यते ॥ ३ ॥ इत्यादिभिर्व्यासादिभिर्विष्णवनेकसहस्रनामस-

माभ्यधिकत्वेनोक्तम् ॥ यद्रामनामतद्धिएवंशित्वेनोक्तस्यातएवानेक सहस्रविष्णुसमस्यातएवविष्णवनेकसहस्रनामतुल्यनाम्नः सच्चिदानंदार्थकरामपदाभिहितस्य परब्रह्मणोदाशरथेर्वाचकमस्तीत्यवधेयम् ॥ अंशिनाम्नोंऽशनामतोऽनेककोटिगुणाधिक्योपपत्तेः ॥ इतिनारदव्यासादीनांसर्वेषां वेदसारार्थविदामुपास्यः सर्ववेदांतगीतपरब्रह्माक्षरादिशब्दवाच्योरामोनतुविष्णवाद्यवतारइतिस्फुटयति सर्वज्ञोनारदः ॥ सर्वेषांत्वंपरब्रह्मेत्यादिसार्द्धद्वयेन ॥ सर्वेषांवेदतात्पर्यविदांमतेत्वमेव परब्रह्मसर्ववेदवेदांतश्रुतपरब्रह्मशब्दवाच्यः परंव्यापकस्त्वमेवेत्यर्थः॥ अतएवब्रह्माविष्णुश्चरुद्रश्चेत्याद्युक्तंसर्वंत्वन्मयम् ॥ त्वद्व्याप्यंत्वद्व्याप्यत्वेनत्वदपृथक्सिद्धेः ॥ सर्वेषांस्वरूपस्थितिप्रवृत्तेस्त्वदधीनतयायेनयत्कारयसि सतत्करोतीतिसर्वेब्रह्मादयस्त्वत्परतंत्रत्वात्त्वच्छेषभूताएवनस्वतंत्रोदेवताइत्यर्थः ॥ नन्वेतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंति ॥ अह्रस्वमदीर्घमनएवस्थूलमेतस्यैवशासने सूर्याचन्द्रमसौविधृतौतिष्ठतः ॥ इतियाज्ञवल्क्योक्ताः। इत्याद्याःश्रुतयःसर्वाधारत्वं सर्वनियंतृत्वमक्षरशब्दवाच्यस्यवदंति एषसंप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरूपसंपद्यस्वेनरूपेणाभिनिष्पद्यते ॥ इत्येषाश्रुतिः परंज्योतिःशब्दवाच्यस्य मुक्तजीवप्राप्यत्वंवदतीत्यतो नरामस्यसर्वश्रुतिवेद्यत्वमुपपद्यते ॥ ७५ ॥

**त्वमक्षरंपरंज्योतिस्त्वमेवपुरुषोत्तमः ॥**
**त्वमेवतारकंब्रह्मत्वत्तोऽन्यन्नैवकिंचन ॥ ७६ ॥**

इत्याशंक्याह ॥ त्वमक्षरंपरंज्योतिरिति ॥ तत्सर्वाधारत्वेनसर्वनियंतृत्वेन श्रुतमक्षरंमुक्तजीवप्राप्यत्वेन परंज्योतिस्त्वमेव ॥ त्वमेवपुरुषोत्तमइति ॥ महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः ॥ पुरुषान्नपरः किंचित्साकाष्ठासापरागतिः ॥ १ ॥ इत्युक्तः ॥ सर्वकाष्ठाभूतपरगतिरूपः पुरुषस्त्वमेवेत्यर्थः । यच्चतारकंब्रह्मेत्यभिधीयतेतदपित्वमेव ॥ त्वत्तोऽन्यत्किंचनाप्यक्षरपरंज्योतिरादिपदवाच्यं नास्तीत्यर्थः॥ ७६ ॥

शांतंसर्वगतंसूक्ष्मंपरब्रह्मसनातनम् ॥
राजीवलोचनंरामं प्रणमामिजगत्पतिम् ।७७।

एवंसच्चिदानंदार्थकरामपदवाच्यव्यतिरिक्तस्याक्षरादिशब्दवाच्यत्वंप्रतिषिध्याथतस्यैवमूलवस्तुत्वं प्रतिपाद्यप्रणमन्नुपसंहरति। शांतमिति ॥ सर्वगतम् ॥ सर्वांतर्यामित्वेनसर्वस्वामिनम् ॥ सर्वगतत्वेहेतुः ॥ सूक्ष्ममिति ॥ ननुसूक्ष्मेषुजीवेषुसूक्ष्मस्य श्रीरामस्यनहिव्यापकत्वमुपपद्यते ॥ सूक्ष्मत्वेनोभयोः समानत्वादित्याशंक्याह ॥ परब्रह्मेति ॥ परंसर्वोत्कृष्टंब्रह्मव्यापकम् ॥ व्यापकानामपिजीवानांव्यापकमित्यर्थः ॥ कुतः ॥ अणोरणीयानितिश्रुतेरणोर्जीवादप्यणीयस्त्वेनपरब्रह्मणस्तद्व्यापकत्वंनिष्पत्तेः(जीवानांव्यापकम्)॥ सनातनमितिपदंश्रीरामनिष्ठपरब्रह्मत्वस्यसनातनत्वबोधनेनरामस्यस्वयंपरब्रह्मत्वंनिवोध्यपरब्रह्मावतारत्वंव्यावर्त्तयति ॥ राजीवलोचनमिति ॥ तस्यैवातिसूक्ष्मस्यपरस्यब्रह्मणः साकारत्वंनारदस्य तन्मुखारविंदरसिकत्वं विशेषतस्तन्नयनारविंदरसिकत्वंद्योतयति॥ रामम्॥ रमणीयविग्रहम् ॥ सच्चिदानंदार्थकरामपदवाच्यंवाजगत्पतिमिति ॥ जगत्पतेर्जगदंतर्वर्तिजनसेव्यत्वेनरामस्यसर्वसेव्यत्वंवदति ॥ प्रणमामीति ॥ प्रकर्षेणकायवाङ्मनोभिर्नमामीति तत्प्रणामस्यैव तत्प्रसन्नताहेतुत्वंद्योतयति ॥ ६७ ॥

श्रीव्यासउवाच ॥ ततःप्रसन्नःश्रीरामः प्रोवाचमुनिपुंगवम् ॥ तुष्टोस्मिमुनिशार्दूल वृणीष्ववरमुत्तमम् ॥ ७८ ॥

एवंस्तुतिवतिनारदे श्रीरामप्रसादजातइत्याह ॥ श्रीव्यासउवाचेति ॥ ततःश्रीनारदकृतस्तुतेःप्रसन्नःसन्श्रीराममुनिपुंगवम् ॥ मुनि-

श्रेष्ठंश्रीरामस्वरूपरूपगुणविभूतीनां याथात्म्यस्यसंक्षेपतो वर्णनान्मुनिश्रेष्ठंनारदंप्रोवाच ॥ हेमुनिशार्दूल ॥ अहंत्वत्स्तुत्यातुष्टोस्मि त्वमुत्तमंवरंवृणीष्वेति ॥ ७८ ॥

श्रीनारदउवाच ।

यदितुष्टोसिसर्वज्ञ श्रीराम करुणानिधे ॥
त्वन्मूर्तिदर्शनेनैव कृतार्थोऽहंममेप्सितम् ॥ ७९ ॥

ततोवरंदित्सुं श्रीरामंप्रतिश्रीनारदः प्राह ॥ श्रीनारदउवाच ॥ हेसर्वज्ञहेकरुणानिधेहेश्रीराम यदितुष्टोसियदिचमह्यमुत्तमं वरंदातुंप्रतिश्रृणोषितर्हिद्विभुजश्यामसुन्दरत्वन्मूर्तिदर्शनेनैवकृतार्थोऽहम् ॥ यथोक्तत्वच्छ्रीमूर्तिसाक्षात्कारेणैवाधिगतपरमपुरुषार्थोऽहम् सदात्वन्मुर्तिदर्शनमेव ममेप्सितंममाप्तुमिष्टम् ॥ सामान्येनपुन्स्कम् ॥ अतस्त्वन्मूर्तिसाक्षात्कारोमेसर्वदास्त्वितीमं मेववरंदेहीतिशेषः ॥ नचाप्रतिहतसर्वत्रसंचारः ॥ नाप्यणिमादिसिद्ध्युपलाभश्च ममेप्सितइत्यर्थः ॥ सर्वज्ञेति ॥ त्वमेतत् ॥ जानासीतिसंवोधयति ॥ करुणानिधेइति ममेप्सितंपूरयेतिसूचितम् ॥ अत्र ॥ अणोरणीयांसमनंतवीर्य्यं प्राणेश्वरंराममसौददर्श ॥ इत्युक्तमेव प्रथमंत्वन्मूर्तिदर्शनमवगम्यते ॥ ततोनारायणंजगन्नाथमित्यारभ्य ॥ अन्तर्धानंजगामाथपुरतस्तस्यराघव इत्येतत्पर्य्यंतं स्वप्रत्यक्षमेवरामंतुष्टावनारदइति चाप्यवगम्यते ।७९।

धन्योऽहंकृतकृत्योहं पुण्योहंपुरुषोत्तम ॥
अद्यमेसफलंजन्मजीवितंसफलंचमे ॥ ८० ॥

एवंसर्वदा श्रीरामसाक्षात्काररूपं स्वेप्सितंफलंप्राप्य ॥ अथात्मानमात्मीयानिसाधनानिचप्रशंसति ॥ धन्योहमित्यादित्रयेण कृतंकृत्यंकर्तव्यं यज्ञतपोज्ञानतन्नामस्मरणादिकं सर्वंयेनसकृतकृत्यः ॥

मुमुक्षूणांश्रीरामसाक्षात्कारपर्य्यंतंतत्स्वरूपज्ञानयत्नादिकं तपस्तन्नामस्मरणतत्स्तुत्यादिकमवश्यंकर्तव्यम् ॥ नतन्मूर्तिसाक्षाद्दर्शनानंतरमित्यर्थः ॥ ८० ॥

अद्यमेसफलंज्ञानमद्यमेसफलंतपः ।
अद्यमेसफलो यज्ञस्त्वत्पादांभोजदर्शनात् ॥८१

श्रीरामदर्शनानंतरं जीवस्यकिंचिदपिसाधनानुष्ठानंनास्तीतिस्फुटीकर्तुम् ॥ सर्वसाधनफलभूतस्य श्रीरामचरणारविंददर्शनस्यस्वधन्यत्वादिकेस्वजन्मजीवितसफलत्वेसर्वसाधनस्वज्ञानतपोयज्ञतन्नामस्मरणादिसफलत्वेचहेतुंदर्शयति ॥ त्वत्पादांभोजदर्शनात्॥ धन्योऽहंकृतकृत्योऽहं पुण्योऽहंमेजन्मादिकं सर्वंतीर्थयात्रादिकंचसफलमभवदित्यर्थः ॥ ८१ ॥

अद्यमेसफलं सर्वं त्वन्नामस्मरणंतथा ।
त्वत्पादांभोरुहद्वंद्वेसद्भक्तिंदेहिराघव ॥ ८२ ॥

सर्वम् ॥ सर्वतीर्थयात्रादिनियमव्रतादिकम् ॥ अथेदृशस्त्वत्साक्षात्कारः सदैव ममास्त्वितिप्रार्थयते ॥ त्वदिति ॥ त्वत्पादाब्जयुगलविषयांसतीमव्यभिचारिणीं भक्तिंत्वत्प्रत्यक्षपूजनपादसंवाहनादिलक्षणां सर्वसाधनफलभूतांप्रपन्नैः फलबुद्ध्याक्रियमाणां देहीति ॥ हेराघवेति ॥ रघुवंशोद्भवानां प्रतिश्रुतमवश्यं देयमितिभावः ॥ ८२ ॥

ततः परमसंप्रीतो रामः प्राहसनारदम् ।

श्रीरामचन्द्र उवाच ।

मुनिवर्य्यमहाभागमुनेत्विष्टंददामिते ।
यत्त्वयाचेप्सितं सर्वं मनसातद्भविष्यति ॥८३॥

ततइति ॥ त्वन्मूर्त्तिदर्शनेनैवकृतार्थोऽहम् ॥ ममेप्सितमित्याद्यु-
क्तत्वात् प्रयोजनांतरशून्यात स्वपदारविंदविषयकानुरागतइत्यर्थः ।
स्वयमनुरागी विज्ञत्वात् ॥ परमसंप्रीतः ॥ अतितृप्तः सन्नारदंप्राह ॥
हेमुनिवर्य्येत्यादिसंबोधनत्रयमत्यादराद्भक्तिस्नेहाच्चतेतवेष्टंददामित्वित्य-
वधारणे । चशब्दात् । त्वत्सदृशैस्त्वदीयैश्चान्यैर्यन्मनसा ईप्सितंतं-
तत्सर्वंभविष्यति ॥ अत्रतत्सर्वं भवत्विति वक्तव्ये । तत्सर्वंभविष्यतीति
भविष्यमाणानां तत्सदृशानामभिप्रायेणोक्तम् ॥ किंपुनस्त्वत्प्रार्थितः
सर्वदामत्साक्षात्कारोमत्पादाब्जभक्तिश्च भविष्यतीति वक्तव्यम् ॥
अनेनस्वस्यातिवदान्यत्वं स्तवराजस्य श्रीरामप्रसन्नतोत्पादनद्वारा-
स्वपाठकवांछितप्रदत्वंच व्यक्तीकृतम् ॥ ८३ ॥

॥ श्रीनारदउवाच ॥

## वरंनयाचेरघुनाथयुष्मत्पादाब्जभक्तिःसततं-
## ममास्तु । इदंप्रियंनाथवरंप्रयच्छपुनः पुनस्त्वामि-
## दमेवयाचे ॥ ८४ ॥

अत्र श्रीनारदोवरांतरंभक्तिविरोधिनं ज्ञात्वाप्रयोजनांतरे स्ववै-
तृष्ण्यद्योतयन् स्वेप्सितं वरंयाचितवानित्याह श्रीनारदउवाचेति ॥
हेरघुनाथवरं राज्यैश्वर्य्यकामभोगादिरूपमहंनयाचे ॥ तर्हिकीदृशंया-
चसेतत्राह । युष्मदिति ॥ भवत्पादांबुजभक्तिर्ममसततमस्तु त्वदर्चन
लक्षणात्वदनुरक्तिलक्षणाच सानिरवच्छिन्नमधुधारावत्सर्वदानुवर्त-
तामित्यर्थः ॥ हेनाथइदमेवत्वत्पादारविंदभक्तिमकरंदरूपं प्रियंवरं
मधुव्रताय मह्यंनारदाय प्रयच्छदेहीति ॥ पुनः पुनरिदमेव वरं त्वामहं-
याचेऽभ्यर्थये ॥ ध्रुवादिभ्यइवतदनिष्टमपि राज्यादिकं कदाचिन्महाम-
नादद्यादिति शंकयाप्रार्थनायाः पौनः पुण्येन वरांतरार्पणात्सन्निव-
र्त्तयति ॥ ८४ ॥

श्रीवेदव्यासउवाच ।

इत्येवमीडितोरामः प्रादात्तस्मैवरांतरम् ।
विरराममहातेजाः सच्चिदानंदविग्रहः ॥ ८५ ॥

श्रीरामस्तु महोदारस्तत्प्रार्थितं स्वपादाब्जभक्तिवरंदत्वाथ-तदनुकूलमेववरांतरमपिददावित्याह ॥ श्रीवेदव्यासउवाचेति ॥ इत्येवमिति ॥ इतिशब्दः प्रकरणसमाप्तिद्योतनार्थः ॥ एवंपूर्वोक्तप्रकारेण नारदेनेडितः श्रीरामस्तस्मै नारदाय वरांतरंप्रादात् ॥ ८५ ॥

अद्वैतममलंज्ञानंत्वन्नामस्मरणंतथा ।
अंतर्द्धानं जगामाथपुरतस्तस्य राघवः ॥ ८६

किंतद्वरान्तरमित्यपेक्षायामाह । अद्वैतमिति । श्रीरामसमाभ्य-धिकनिवर्त्तकं श्रीरामसदृशंतत्वांतरं नास्तीत्येवंरूपंज्ञानम् । नतत्स-मश्चाभ्यधिकश्चदृश्यते । नतस्यप्रतिमास्तियस्यनाममहद्यशः । चिन्म-यस्याद्वितीयस्य ब्रह्मणोरूपकल्पना । इत्येवमादिश्रुत्युक्तम् । अमलंस्वय मलरहितम् । अन्येषांमायामलनिवर्तकम् । तथातेनप्रकारेण तस्यनिरु-पमस्य स्वस्यप्रणवादिकारणत्वेननिरुपमं यद्रामेति नामतस्यस्मरणंचि-तनंमृणाल तंतुवच्चित्तानुवृत्तं तद्यथास्यात् । एतच्चातिप्रेष्ठे तच्चित्ते स्वयंभासितुमितिज्ञेयम् । अत्र । अद्यमेसफलं सर्वंत्वन्नामस्मरणंतथा । इत्युक्तेः स्वनामस्मरणपरस्यापि पुनःस्वनामस्मरणवरदानंतत्प्रभावाति शयप्रकाशकमितिज्ञेयम् । किंचाद्वैतममलंज्ञानमित्यत्र व्याप्यभूताः सर्वेपदार्था व्यापकस्यविशेषणत्वंगताः । तत्तद्विशिष्टात्तस्मात्सर्वव्या-पकाद्रामान्नातिरिच्यंते । तदंतर्यामितत्पर्य्यंताश्चभवंतीतिविशिष्टा-द्वैतज्ञानमप्यत्राभिमतंभवति ॥ विरराम ॥ तूष्णींबभूव । महातेजाः । इति । यज्ज्योतिरमलंशिवम् । तदेवपरमंतत्वम् । तथा । एवंसंचित-

येद्विष्णु यज्ज्योतिरमलंशिवम् ॥ ज्योतिर्मयंराममहंभजामीति तत्र तत्रोक्तम् । एषसंप्रसादोऽस्माच्छरीरात्समुत्थायपरंज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते । इतिश्रुतौमुक्तजीवप्राप्यतयानिर्दिष्टं च स्वप्रकाशपरंज्योतिर्यत्परमंतत्वं तदेवश्रीनारदेन प्रसादितस्तद्वत्तवरस्तदग्रेस्थितः श्रीरामएवविरराभेतिप्रकाशितंभवति (इतिप्रकाशितंभवति इति कथितंभवति)। सच्चिदानंदविग्रहइति। मनुष्याकारस्यैव सच्चिदानंदरूपत्वेन प्रकाशमानत्वात् । तच्छरीरविषयकौपाधिकशंका निराकारत्वशंकाचनिरस्ता । अथवा । अर्द्धमात्रात्मकोरामोब्रह्मानंदैकविग्रहइतिश्रुतेः ॥ सच्चिदानंदविग्रहइतिसच्चिदात्मकंयत्परब्रह्मपरमंतत्वं तदेवघनीभूतं द्विभुजादिरूपेणभासमानंसच्चिदानन्दार्थकराम पदसाक्षाद्वाच्यत्वेनरामइत्युच्यते इत्यर्थः। किंचमहातेजाइति तत्प्रभावाद्देवतादृशं ज्ञानमभूदिति सच्चिदानंदविग्रहइतिमनुष्यवेषस्यैव सच्चिदानन्दरूपत्वे न स्मृतौभानमभूदितिभावः ॥ ८६ ॥

अंतर्द्धानमित्यर्द्धकम् । अथसांगवरदानानंतरंतस्यनारदस्यपुरतोऽग्रेराघवोऽतर्द्धानिंजगामप्राप । तदग्रवर्तीसन्नेवतदुत्कंठातिशयं द्रष्टुंकौतुकेनक्षणमंतर्दधौ ॥ अन्यथा॥ यत्त्वयाचेप्सितंसर्वं मनसातद्भविष्यतीति नारदेप्सितसर्वदाश्रीरामसाक्षात्कारपरश्रीरामवरदानवाक्यस्य वैयर्थ्यापत्तेः। राघवइति। रामोद्विर्नाभिभाषते। इतितस्य सत्यप्रतिज्ञत्वंव्यज्यते ॥ ८८ ॥

## इतिश्रीरघुनाथस्य स्तवराजमनुत्तमम् ।
## सर्वसौभाग्यसंपत्तिदायकं मुक्तिदंशुभम्॥८७॥

अथस्तवराजस्यफलानि वक्तुमुपचक्रमे । इतिश्रीति । इतिशब्दः स्तवराजसमाप्तिद्योतकः । उद्गच्छतितमोयस्मात्तदुत्तमम् । नास्त्युत्तमंयस्मात्तदनुत्तमम् । श्रीरामस्वरूपरूपनामगुणविभूतियाथात्म्य प्रकाशकमित्यर्थः । सर्वेति । सौभाग्यं पुंसांव्यवहारिणां राजादिस

त्कारः । विरक्तानांगुर्वादिसत्कारः स्त्रीणांपत्यादिसत्कारश्च । संपत्तिरचलाश्रीः । मुक्तिः । अविद्याछेदपूर्विका श्रीरामप्राप्तिः । अत्रस्तवराजमिति नपुंसकस्य प्रथमांतंपरमस्तीति । ब्रह्मपुत्रेणेति कर्तृपदेन कथितंप्रकीर्तितमितिक्रियापदाभ्यांचावगम्यते ॥ अन्यथा स्तवराजः॥ कथितो ब्रह्मपुत्रेण तवस्नेहात्प्रकीर्तित इत्येवमुक्तंस्यात् ॥ तदेवंस्तवराजोपसंहारेस्तवराजपदस्य क्लीवत्वेचगते ॥ उपक्रमेऽपि । स्तवराजं पुराप्रोक्तं नारदेनचधीमता॥ इत्येत्रंस्तवराजपदंक्लीवत्वेनपठनीयम्॥८७॥

**कथितंब्रह्मपुत्रेण वेदानांसारमुत्तमम् ।**
**गुह्याद्गुह्यतरंदिव्यंतवस्नेहात्प्रकीर्त्तितम् ।८८॥**

ब्रह्मपुत्रेण वेदविच्छिरोमणिर्ब्रह्मा तस्यपुत्रेण वेदतात्पर्य्यज्ञेन सनत्कुमारेण नारदेन चेत्यर्थः ॥ तयोर्वेद तात्पर्य्यज्ञत्वमभिव्यनक्ति । वेदानांसारमुत्तममिति ॥ वेदानां सर्वेषां सारंतत्राप्युत्तमम् ॥ परब्रह्मस्वरूपं कीदृशं किंचपरब्रह्मशब्देनाभिधीयते इतीदृशं जीवानां यदज्ञानं तमोस्ति तन्निवर्तकमित्यर्थः । यदत्रस्तवराजेउक्तं ॥ तदेवत्रेदानामुत्तमं सारमस्ति । इतोन्यथा येवदंतितेत्रेदानामभिप्रायाऽनभिज्ञाः ॥ तदुक्तं वेदसारं नभवतीत्यर्थः । अतएव गुह्याद्गुह्यतरंदिव्यम् ॥ तद्युधिष्ठिरस्य । किंतत्वंकिंपरंजाप्यं किंध्यानंमुक्तिसाधनम् ॥ इत्येवंपरतत्वस्वरूपरूपनामध्यानादिजिज्ञासोः स्नेहान्मया वेदव्यासेन प्रकीर्तितम्॥८८॥

**यः पठेच्छृणुयाद्वापि त्रिसंध्यंश्रद्धयान्वितः ।**
**ब्रह्महत्यादिपापानि तत्समानिवहूनिच ॥**
**स्वर्णस्तेयसुरापानगुरुतल्पायुतानिच ॥ ८९ ॥**

टि० (१) तैर्वेदानामभिज्ञैरुक्तं वेदसारं नभवतीत्यर्थः ॥

गोवधाद्युपपापानि अनृतात्संभवानि च।
सर्वैः प्रमुच्यते पापैः कल्पायुतशतोद्भवैः ॥ ९० ॥

अथ स्तवराजस्य ब्रह्मविद्यात्वं दर्शयन् तस्यानुषंगिकं फलमाह॥ यःपठेदिति ॥ ब्रह्महत्येति ॥ यद्यपि ब्रह्महास्वर्णहारीच सुरापीगुरुतल्पगः ॥ महापातकिनोह्येते तत्संसर्गीचपंचमः ॥ १ ॥ इतिस्मृत्या-स्वर्णस्तेयादीनि महापापानि ब्रह्महत्यादिकानीत्युक्तानि ॥ तथाप्यत्र-स्वर्णस्तेयादीनां तत्पृथक्तोक्तया ॥ सब्रह्महत्यां तरतिसवीरहत्यां-तरतिसभ्रूणहत्यांतरति ससर्वहत्यां तरतीत्यादीनि श्रीरामतापिनीय-श्रुत्युक्तानिपापानिब्रह्महत्यादिपदेनसंगृहीतानिभवंति ॥ तत्समानि ब्रह्महत्यासमानि बहूनिच ॥ तानिकानीत्यपेक्षायामाह ॥ स्वर्णस्तेयेति स्वर्णस्तेयादीनामयुतानि ॥ अयुतसंख्याकानि ॥ एतानिमहापातकानि-भवंति । तथोक्तम् ॥ ब्रह्महास्वर्णहारी च सुरापीगुरुतल्पगः ॥ महा-पातकिनोह्येते तत्संसर्गीचपंचमः ॥ १ ॥ इतितेषांब्रह्महादीनां चतु-र्णां संसर्गो विद्यते यस्यस तत्संसर्गी ॥ अकृतब्रह्महत्यादिपापोऽपित-त्संसर्गमात्रेण सपंचमोमहापापी ॥ गोवधादीन्युपपातकान्युच्यंते॥ अनृतान्मिथ्याभाषणात्संभवोयेषांतानिच ॥ असंधिर्विभक्त्यलोपश्चार्षः॥ अनृतवचनादधिकोऽधर्मोनास्तीत्युक्तं भागवते ॥ नह्यनृतात्परोऽधर्मो-इतिहोवाच भूरियम् ॥ सर्वं सोढुमहंमन्ये ऋतेलीकपरंनरम् ॥ १ ॥ इति । कल्पायुतशतोद्भवैः । अनंत जन्मोपार्जितैः सर्वैः पापैः (कर्तृभूतैः) श्रीरामस्तवराजपाठी (कर्मभूतः) प्रमुच्यते ॥ उक्तान्यनुक्तानिचसर्वा-एयपिपापानि श्रीरामस्तवराज पाठिनंप्रकर्षेणमुच्यंतित्यजंतीत्यर्थः ॥ यथापुष्करपलाशेआपोनश्लिष्यंते । एवमेवंविदिपापकर्मनश्लिष्यते॥ तस्यपुत्रादायमुपयंतिसुहृदः साधुकृत्यां (साधुकृत्यांनामसाधुकृत्यं दीर्घआर्षः) दुर्हृदः पापकृत्यामितिश्रवणात् । सुहृदःकायवाङ्मनोभि-स्तत्सेवनपराः। तत्सेवनस्यफलंतत्साधुकृत्यंतत्पुण्यमुपयंति । एवं-दुर्हृदस्तद्द्वेषिणस्तस्यफलंतत्पापकृत्यंतत्पापमुपयंतीतीत्थंनाकृताभ्याग

मदोषवचनस्यात्रावकाशोस्तीति । एवंसंचितसर्वपापविनाशरूपं स्तवराजपाठश्रवणफलमुक्तम् ॥ ९० ॥

**मानसं वाचिकं पापं कर्मणा समुपार्जितम् ।**
**श्रीरामस्मरणेनैव तत्क्षणान्नश्यति ध्रुवम् ॥९१॥**

इदानींसंचितक्रियमाणयोः पापयोःश्रीरामसकृत्स्मरणसमकाले-विनाशत्वोक्त्याकैमुत्यन्यायेनस्तवराजपाठश्रवणपराणां वर्त्तमानदेह-स्यांते श्रीरामप्राप्तिंद्योतयति । मानसमिति । मानसंमनसोपार्जितंवा-चिकंवचसोपार्जितंकर्मणा कायेनोपार्जितंयद्यत्पापंतत्तत्सर्वं श्रीरामस्म रणेनैवएवकारः सहायांतरंव्यवच्छिनक्ति केवलश्रीरामस्मरणेनैवतत्-क्षणात श्रीरामस्मरणक्षणे एवश्रीरामस्मरणसमकालेइत्यर्थः । नश्यति ध्रुवम् । निश्चितंनश्यतिनात्रसंशयः कर्त्तव्यइत्यर्थः । तथैवश्रुतिरप्याह ॥ यथेषीकातूलमग्नौप्रोतंप्रदूयेतैवंहास्यसर्वेपाप्मानः । प्रादूयंतइति । यथे यंश्रुतिर्वदतिसर्वपापभस्मीभावंतथैव । षडक्षरोवह्निपूर्वस्तारकस्त्वभि धीयते । महापातकिनांपापदहनेदहनोपमः । इतीदंवाक्यं षडक्षरस्य सर्वपापदाहकत्वंवदतिरामनाम्नः षडक्षरस्यचैक्यात् श्रीरामनामस्मर-णेनैवनश्यतीत्यस्मिन्नर्थे यथेषीकातूलमितिश्रुतेः प्रमाणत्वमुपपद्यते तथाचश्रीरामस्तवराजपाठिनस्तत्पाठेनैवसंचितक्रियमाणयोर्नाशात्॥ प्रारब्धस्यभोगेनैवक्षयात् । देहांतेमुक्तिदंशुभमित्युक्तामुक्तिरुपपद्यते । तद्वत्कालब्धकामांश्चभुक्त्वांतथापदंपरमंयांतितेच । इति श्रीरामता-पिनीये श्रीरामभक्तानांदेहांतेपरमपदप्राप्तिश्रवणाच्च ॥ ९१ ॥

**इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते ।**
**रामः सत्यं परब्रह्म रामात्किंचिन्नविद्यते॥९२॥**

ननुश्रीरामः सगुणंब्रह्मतस्यकार्यभूतं निखिलंजगदित्येतदुभयं यदिपारमार्थिकंसत्यंस्यात्तदेवंसर्वमुक्तमनुक्तञ्च घटेतनचतस्यसत्य-

त्वमुपपद्यते॥ सत्यंज्ञानमनंतंब्रह्म॥ मनसैवेदममाप्तव्यम्॥ब्रह्मविद्ब्रह्मै-वभवति ॥ ब्रह्मसन्ब्रह्माप्नोति ॥ एकमेवाद्वितीयंब्रह्मनेहनानास्तिकिं-चन॥ निष्कलंनिष्क्रियंशांतंनिरवद्यंनिरंजनम् ॥ इत्येवमादि श्रुतिभि-श्चिन्मात्राद्वितीयस्य वस्तुनःपरमार्थसत्यत्वप्रतिपादनादित्याशंक्याह। इदंसत्यमिति ॥ इहअस्मिन्स्तवराजेयदुच्यते श्रीरामस्यनारायणादि कारणत्वंसर्वजगत्कारणत्वंसर्वव्यापकत्वं निरंजनादिपदवाच्यत्वम् । परमतत्वत्वंसत्यानंदगुणकापरिच्छिन्नचित्स्वरूपत्वंसच्चिदानंदविग्र-हत्वंतन्मंत्रस्यपरजाप्यत्वं संसारतारकत्वंचतन्नाम्नो भुक्तिमुक्तिप्रदत्वं तद्ध्यानस्यमुक्तिप्रदत्वं तस्यसनातनपरब्रह्मत्वमक्षरादिशब्दवाच्यत्वं-तद्व्यतिरिक्तस्याक्षरादिशब्दाऽवाच्यत्वरहितत्वं स्तवराजस्यसर्व-वेदसारत्वंतत्पाठिनः॥ पूर्वोत्तराद्यदाहपूर्वक मुक्तिप्रदत्वंचयत्किंचि-दन्यत्त्वएतत्सर्वं सत्यमिदंसत्यमिदं सत्यमितिसत्यमित्यस्य त्रिरु-क्त्यानिःसंदेहीकृतंभवति॥ ननुप्रौढ्योच्यतेइदमितितत्राह ॥ रामःस-त्यंपरब्रह्मेति ॥ यत्सत्यंज्ञानमनंतं ब्रह्मेत्येवमादिश्रुतिबोधितंपारमा-र्थिकं सत्यंपरब्रह्मसर्वोत्कृष्टं वृहद्गुणयोगिवस्तुतद्रामएवनिखिलहेय प्रत्यनीकासंख्येयकल्याणगुणगणसच्चिदानन्दविग्रहः सत्यानन्दगुण-कापरिच्छिन्नचित्स्वरूपः श्यामसुन्दरःपंकजाक्षोरामएव॥ सच्चिदा-नन्दार्थकरामपदवाच्यएव॥ रमंतेयोगिनोऽनंतेसत्यानन्देचिदात्मनि॥ इतिरामपदेनासौपरब्रह्माभिधीयते॥१॥ इतिश्रुत्यापरब्रह्मणः सच्चि-दानन्दार्थकरामपदाभिधेयत्वोक्तेः॥ अर्द्धमात्रात्मकोरामोब्रह्मानंदैक-विग्रहः॥ ध्यानव्याख्याननिरतश्चिन्मयःपरमेश्वरः॥ इत्येवमादिश्रुति-भिः॥ श्रीशार्ङ्गधारिणंरामंचिन्मयानन्दविग्रहम्॥ विरराममहातेजाः सच्चिदानंदविग्रहः॥ इत्येवमादिस्मृतिभिश्चतस्यसच्चिदानंदविग्रह-

टि० (१) अखिलहेयानांत्याज्यानां प्रत्यनीकसेनारूपकल्याणानां गणोविद्यतेयस्मिन् सच्चिदानंदविग्रहे ससच्चिदानंदवि-ग्रहोराम एवसद्वृहद्गुणविशिष्टः श्रीरामः॥

ल्लोके॥ नतस्यप्रतिमास्तियस्यनाममहद्यशः॥ इतिश्रुत्यामहद्यशस्त्व-
रामनामवाच्यस्याप्रतिमत्वानुपमत्वोक्तेः ॥ नतत्समश्चाभ्यधिकश्च-
दृश्यते ॥ इतिश्रुत्यातस्यानुपमस्यस्वसमाभ्यधिकनिषेधाच्च ॥ एवं-
श्रीरामस्यपरब्रह्मत्वोत्तथादिव्यविग्रहवत्वं दिव्यगुणवत्वंस्वसमाभ्य
धिकरहितत्वंचदृढीकृत्य । अथतस्मादन्यस्यपरब्रह्मत्वादिकंनिषेधति
रामात्किंचिन्नविद्यते इति॥ रामात्किंचिद्वस्तुपरब्रह्मशब्दवाच्यंनवि-
द्यते॥ अथवा॥ रामःसत्यंपरंब्रह्मपरंसर्वोत्कृष्टं ब्रह्मव्यापकम् ॥ इति
व्यापकयोर्जीवप्रकृत्योरपिव्यापकत्वात्परंव्यापकत्वंरामस्योक्तंभवति।[1]
रामात्किंचिन्नविद्यते॥ रामात्परव्यापकादितिव्याप्यं विनातद्व्याप-[2]
कत्वानुपपत्तेः॥ रामात्प्रकृतिजीवव्यापकात् ॥ तद्व्याप्यात्प्रकृति-
जीवसमूहात् । अर्थाच्चिदचिच्छरीरकाद्रामात्किंचिद्वस्तत्वन्यन्नविद्यते
नास्तीतिरामस्यपरब्रह्मपदवाच्यत्वेन चिदचिद्विशिष्टत्वोपपत्तेः॥
रामात्किंचिन्नविद्यते इत्येतेनाद्वैतत्वोपपत्तेश्चविशिष्टाद्वैतमुक्तं-
भवति॥ ६२॥

## तस्माद्रामस्यरूपोऽयंसत्यंसत्यमिदंजगत् ॥६३॥

तदेवस्पष्टयन्जगतः सत्यत्वंसाधयति॥ तस्माद्रामस्यरूपो-
ऽयमित्यादिनातस्माद्रामेण जीवप्रकृत्योर्वहिरंतर्व्याप्तत्वाद्वह्निना वहि-
रंतर्व्याप्तस्यायःपिण्डस्य वह्निरूपत्ववद्रामेण वहिरंतर्व्याप्तत्वाद्राम-
स्यरूपोऽयमिति॥ रूपमिदमितिवक्तव्येरूपोयमित्यार्षः॥ अतोरामस्य-
रूपत्वादिदं जगत्सत्यंसत्यम्॥ अन्यथाजगतः॥ सत्यत्वानंगीकारेतद्

---

टि० (१) नित्यःसर्वगतःस्थाणुरचलोयंसनातनइतिस्मृत्याजीवस्य
व्यापकत्वमुक्तम् ॥ममयोनिर्महद्ब्रह्मतस्मिन्गर्भंदधाम्यहम्
इतिस्मृत्याप्रकृतेर्मायायाः व्यापकत्वमुक्तम् ॥
(२) व्याप्यंजीवं विनातत्तस्यरामस्यव्यापकत्वस्यअनुपपत्तेः
रामस्यपरंव्यापकत्वमुक्तंभवतीति पूर्वेणान्वयः॥

व्याप्याभावेन तत्परब्रह्मत्वस्यसर्वव्यापकत्वस्यबाधात्परब्रह्मपराणामशेषवेदवेदांतानां वैयर्थ्यापत्तेस्तदुक्तानां ज्ञानाद्युपायानामपि वैयर्थ्यापत्तेर्जीवानां संसाराद्विमुच्यब्रह्मप्राप्तिर्नोपपद्यते ॥ तत्कुतःपरब्रह्मेतिनाम्नस्तद्वाच्यस्य सर्वव्यापकस्यचासत्यत्वेनतद्ध्येयत्वस्यतज्ज्ञेयत्वस्यचानित्यत्वेन तत्प्राप्यत्वस्य तदैक्यस्यचासत्यत्वनिष्पत्तेः ॥ तस्माद्रामस्यरूपत्वात् सत्यंसत्यमिदंजगदितिव्यासवचनात् ॥ अजामेकांलोहितशुक्लकृष्णां वह्वींप्रजांजनयंतींस्वरूपाम् ॥ अजोह्येकोजुषमाणोऽनुशेतेजहात्येनां भुक्तभोगामजोऽन्यः ॥ १ ॥ गौरनाद्यंतवती सा-जनयन्तीभूतभाविनी ॥ २ ॥ इत्येवमादिश्रुतिभ्यः । प्रकृतिंपुरुषंचैव विद्ध्यनादीउभावपि इत्येवमादिस्मृतिभ्यश्चप्रकृतिजीवयोरजत्वेनानादित्वेनचनित्यत्वसिद्धेः ॥ आकाशवत्सर्वगतश्चनित्यइत्येवमादिश्रुतिभ्यःपरमात्मनोरामस्यसर्वव्यापकत्वनित्यत्वनिष्पत्तेः ॥ परब्रह्मणोरामस्यतद्व्यापकत्वस्यचतद्व्याप्ययोश्चिदचितोश्च नित्यत्वेनतद्विशिष्टत्वस्यचनित्यत्वनिष्पत्तेः । रामाख्यपरब्रह्मपरतत्वस्यतुस्वसमाभ्यधिकरहितत्वेननित्यमद्वैतत्वनिष्पत्तेर्विशिष्टाद्वैतमेव सर्ववेदवेदांतसंमतं सनातनमतमित्यवधेयम् ॥ ६३ ॥

---

टि० (१) तद्व्याप्याभावेन तत्तस्यरामस्यव्याप्यं जगत्तस्यजगतः अभावेनअसत्यत्वेनतत् तस्यपरब्रह्मत्वस्य सर्वव्यापकत्वस्य बाधाद्वैयर्थ्यापत्तेः ॥

(२) परब्रह्मेति परब्रह्मइतिरामनाम्नः तद्व्याप्यस्यतत्तेनब्रह्मनाम्नावाच्यस्य रामस्यसर्वव्यापकस्य च असत्यत्वेन ॥ तद्ध्येयत्वस्य तत्तस्यरामस्यभक्तैर्ध्येयत्वस्यचपुनः तज्ज्ञेयत्वस्य ज्ञानिभिस्तस्यज्ञेयत्वस्य अनित्यत्वेनभक्तैस्तत्प्राप्यत्वस्य ज्ञानिभिस्तदैक्यत्वस्य च असत्यत्वनिष्पत्तेर्जीवानांब्रह्मप्राप्तिर्नोपपद्यते ॥

(३) चिच्च अचिच्चचिदचितौचेतनजडौजीवप्रकृतीताभ्यांचिदचि-

श्रीसूतउवाच।

**श्रीरामचन्द्ररघुपुंगवराजवर्य्य राजेन्द्ररामरघुनायकराघवेश । राजाधिराजरघुनंदनरामभद्रदासोऽहमद्यभवतःशरणागतोस्मि ॥ ९४ ॥**

इत्थंश्रीव्यासयुधिष्ठिरसंवादेनस्तवराजंसमाप्येदानीं तदनुगामीसूतोपि श्रीरामचन्द्रंशरणंप्रव्रज्य नारदइवतस्यमूर्तिनामादिसततस्फूर्तिं याचितवानित्याह । श्रीरामचन्द्रेति । बहुना नामकीर्त्तनेनतन्नामसुप्रीतिनिर्भरस्तेन तत्रैकांतिकत्वंव्यज्यते । प्रागहंदासत्वाभिमानीस्थितः । अथबादरायणिसमधिगतत्वत्स्वरूपरूपगुणस्वभावस्त्वय्यनुरज्याद्यारभ्यत्वच्छरणागतोस्मीत्याह । दासोऽहमिति । भवजलधिनिमग्नंमांरक्षेतिपंचमश्लोकांत्यपादेनान्वयः ॥ शरणागतेर्लक्षणान्युक्तानिपंचरात्रे ॥ आनुकूल्यस्यसंकल्पः प्रातिकूल्यविवर्जनम् । रक्षिष्यतीतिविश्वासोगोप्तृत्ववरणंतथा । आत्मनिःक्षेपकार्पण्यंषड्विधाशरणागतिः ॥ १ ॥ इति । तत्रप्रपन्नमधिकृत्य श्रुतिस्मृत्युक्तंभगवदानुकूल्यंभगवदेकोपायतयास्थितिर्भवति तथा तत्प्रातिकूल्यमुपायांतरनिष्ठातद्वर्जनम् ॥ प्रातिकूल्यवर्जनम् । अवशिष्टंव्याख्यातंपुरस्तात् ॥ ९४ ॥

**वैदेहीसहितंसुरद्रुमतले हैमेमहामण्डपे मध्येपुष्पकमासनेमणिमयेवीरासने संस्थितम् । अग्रेवाचयतिप्रभंजनसुते तत्वंचसद्भिः परंव्याख्यातं भरतादिभिः परिवृतंरामंभजेश्यामलम् ॥ ९५ ॥**

---

द्वयंविशिष्टंचविशिष्टंच तदद्वैतंचविशिष्टाद्वैतम् । इत्थंविशिष्टाद्वैतसिद्धम् ।

रामंरत्नकिरीटकुण्डलयुतंकेयूरहारान्वितं सीता
लंकृतवामभागममलं सिंहासनस्थंविभुम् । सुग्री-
वादिहरीश्वरैः सुरगणैः संसेव्यमानंसदा विश्वा-
मित्रपराशरादिमुनिभिः संसेव्यमानंप्रभुम्॥९६।

अथलंकांविजित्यायोध्यामागतस्य श्रीरामस्यस्थितिविशेषं-
ध्यायन् तस्यप्रपत्तिंकरोतिवैदेहीति । वैदेहीसहितंश्रीरामचन्द्रं भजे
इत्यन्वयः । कीदृशमित्यपेक्षायामाह ॥ सुरद्रुमतलेहैमीमहामण्डपस्त-
स्यमध्येमणिमयंपुष्पकंचतदासनं च पुष्पकासनमित्यलुक्समासः ।
तत्रपुष्पकनामकम् ॥ मयालक्ष्म्याकांत्याशोभयाविशिष्टंयदासनंतस्मि-
न्नितिवा । वीरासने । इतितृतीयार्थेसप्तमी । विवक्षावशात्कारकाणि-
भवंतीत्युक्तेः । वीरासनेनसंस्थितमित्यर्थः । कीदृशम् । श्यामलम् ।
इन्द्रनीलमणिप्रभम् । भरतादिभिः परिवृतम् । कस्मिन्सतीत्यपेक्षाया-
माह । धृतव्याख्यानिरतश्चिन्मयःपरमेश्वरः । हनूमंतंचश्रोतारम-
ग्रतः स्यात्त्रिकोणकम् ॥१॥ इतिश्रीरामतापिनीयोपनिषदिलंकांविजि-
त्यागतस्य श्रीरामस्यस्वाग्रस्थंहनुमंतंश्रोतारंप्रतितत्वव्याख्याननिर-
तत्वश्रवणात् । रामस्याग्रेस्थितेप्रभंजनसुतेहनुमतिरामेणपरंतत्वंवाच-
यतिसति । कथंभूतंपरंतत्वम् । सद्भिर्व्याख्यातम् । तत्परंतत्वं किमि-
तिचेदित्यपेक्षायामाह । यत्परंयद्गुणातीतं यज्ज्योतिरमलंशिवम् ।
तदेवपरमंतत्वंकैवल्यपदकारणम् ॥ १ ॥ श्रीरामेतिव्यासेनोक्तम् । परा
त्परतरंतत्वंसत्यानंदंचिदात्मकम् । मनसाशिरसानित्यंप्रणमामिर-
घूत्तमम् ॥ १ ॥ सर्वेषांत्वंपरंब्रह्मत्वन्मयंसर्वमेवहि । त्वमक्षरंपरंज्योति
स्त्वमेवपुरुषोत्तमः ॥ २ ॥ त्वमेवतारकंब्रह्मत्वत्तोऽन्यन्नैवकिंचन ॥ २ ।
शांतंसर्वगतंसूक्ष्मं परंब्रह्मसनातनम् । राजीवलोचनंरामंप्रणमामिज
गत्पतिम् ॥ ३ ॥ इत्येवमादिभिर्नारदेनोक्तंयद्रामस्यस्वरूपविग्रहयोः
सच्चिदानंदरूपं सत्यानंदादिकरुणादयादि भक्तवत्सलत्वादिदिव्यगुणा

धारत्वंतमसः परत्वेन परभूतिस्वामित्वादिकंचतस्य ब्रह्मविरथासत्यो-त्पादनायप्रभंजनसुते श्रीरामेण तदेवपरंतत्वंयाचयतिकीरयतिसती-त्यर्थः। पुनरपिताद्दशंरामंस्मरतिराममित्यादिद्वाभ्याम्। रामंभजे-इतिपूर्वेणान्वयः। अमलंप्रकृतिलेपरहितंस्वभक्तमलनिवर्तकंवा। सिंहा सनस्थंविभुमिति। सिंहासनस्थेनद्विभुजश्यामसुंदरेणैवरूपेणविभुंसर्व-व्यापकमित्यर्थः। हरीश्वरैः। वानरराजैः सुरगणैरिंद्रादिभिः सदा-सर्वदासम्यक्सेव्यमानम्। विश्वामित्रपराशरादिमुनिभिः सदासर्व-स्मिन्कालेसम्यक्स्तूयमानम्। इत्यनेनविश्वामित्रपराशरादिगोत्रीयै-स्तदनुयायिभिश्चसीतासहितः श्रीरामः सदासंसेव्यः सदास्तवनीयश्च येतुतदीयास्संतः श्रीरामंनसंसेवंतेनचसंस्तुवंतितेतद्गोत्रीयाऽपिभ तद्गोत्रीयानतदनुयायिनश्चेतीदंज्ञापितंभवति। प्रभुमिति। कर्तुमकर्तु मन्यथाकर्तुं समर्थम्। स्फुटमन्यत्॥ १६॥

**सकलगुणनिधानंयोगिभिःस्तूयमानंभुजविजित विमानंराक्षसेंद्रातिमानम्॥ महितवृषभयानंसी-तयाशोभमानंस्मृतहृदयविमानं ब्रह्मरामाभिधा-नम्॥ १७॥**

सकलेति॥ निखिलदिव्यगुणाश्रयमित्यर्थः। तथैवोक्तंवाल्मीकि-ना॥ सचसर्वगुणोपेतः कौशल्यानंदवर्द्धनः॥ इति॥ योगिभिर्नारदा-दिभिःस्तूयमानम्॥ इतिपूर्वोक्तैः॥ भुजेति॥ भुजाभ्यांविजितंविमानं-पुष्पकंयेनतम्॥ विजिताविमानावालिप्रभृतयोयेनतमितिवा॥ राक्ष-सेंद्रोरावणस्तमति नाशयतीतिराक्षसेंद्रातिस्ताद्दशोमानश्चित्त समुन्न-तिर्यस्यतम्॥ चित्तसमुन्नतिर्वीरस्थायीउत्साहः॥ महितंसर्वैःपूजितं वृषभंसर्वोत्कृष्टंयानंविमानंपुष्पकंवायस्यतम्॥ गजराजगतिंसंश्लाघ्य-पुष्पकंवेत्यर्थः॥ सीतयाशोभमानम्॥ तडितावारिधरमिवतयातिमं-

जुलमित्यर्थः ॥ हृदयविमानंनिर्गर्वं येषांतेहृदयविमानाःप्रपन्नाः भक्ता-स्तेस्मृतायेनतम् ॥ ध्यातप्रपन्नमितियावत् ॥ तदुक्तम् ॥ दर्शनध्यान-संस्पर्शैर्मत्स्यकूर्मविहंगमाः ॥ स्वापत्यानिपुष्णंतितथाहमपिपद्मज ।१। इति । ईदृशंरामेत्यभिधानम् ॥ अभिधीयतेकथ्यतेऽनेनेत्यभिधानंनाम-संज्ञायस्यतम् ॥ रामाभिधानंब्रह्मरामाख्यंब्रह्मेत्यर्थः ॥ रमंतेयोगिनोऽ-नंतेसत्यानंदेचिदात्मनि ॥ इतिरामपदेनासौपरब्रह्माभिधीयते ॥ १ ॥ इतिरामतापनीयोपनिषदिपरब्रह्मणोरामपदाभितत्वश्रुतेः ॥ तस्यरामा-ख्यत्वश्रुतिसिद्धेः ॥ ६७ ॥

रघुवरतवमूर्त्तिर्मामकेमानसाब्जेनरकगतिहरंते नामधेयंमुखेमे ॥ अनिशमतुलभक्त्यामस्तकेत्व-त्पदाब्जे भवजलधिनिमग्नंरक्षमामार्त्तवंधो ६८

इदानींतन्मूर्तिनामयोःस्फुर्तिमाशास्ते ॥ रघुवरेति ॥ हेरघुवर-श्रीरामचन्द्रमामके मदीयेमानसाब्जेहृत्पुण्डरीकेतवमूर्तिरनिशंस्फुरतु॥ तेतवनामधेयंमेमुखेऽनिशमतुलभक्त्यास्फुरतु ॥ कीदृशंसत् ॥ नरकग-तिहरंमुक्तिदम् ॥ त्वत्पादाब्जेमामकेमस्तकेऽनिशमतुलभक्त्यास्फुरता-म् ॥ हेआर्तवंधोमहाकारुणिक ॥ भवजलधिनिमग्नंमारक्ष ॥ इतिकारु-ण्यमुत्पादयितुंदैन्यंवक्ति ॥ ६८ ॥

राम रत्नमहंवंदेचित्रकूटपतिंहरिम् ॥ कौशल्या-शुक्तिसंभूतं जानकीकण्ठभूषणम् ॥ ६९ ॥

अथतद्विचित्रलीलालालसो रसिकमौलित्वेनप्रणमति ॥ राम-रत्नेति ॥ रामोरत्नमौक्तिकमिवतमहंवंदे ॥ कौशल्याशुक्तिरिवतस्याः

---

टि० (१) ध्याताःचिंतिताःस्मृताः प्रपन्नाभक्ताःयेनश्रीरामेणतम् ॥

संभूतिर्व्यक्तिर्यस्यतम् ॥ तस्यभोक्तीमाह ॥ जानकीतिभोगस्थानमाह। चित्रकूटेति ॥ हरिंमनोहरम् ॥ रूपौदार्य्यगुणैःपुंसांदृष्टिचित्तापहारकम्॥ इतिमहर्षिवचनात् ॥ प्रमदामनोहरगुणग्रामायरामात्मने ॥ इत्यत्रैवोक्तत्वाच्च ॥ ६६ ॥

इतिश्रीकानकुब्जकुलावतंस श्रीरामानन्दीयवैष्णववर श्रीजानकीवल्लभकृपापात्र श्रीरामप्रसादशिष्यशिष्यस्य श्रीहनुमद्दासस्यशिष्येण श्रीहरिदासाख्येन श्रीरामचरणाज्ञयाकृतं सर्ववेदसारभूतं श्रीश्रीरामस्तवराजगुह्यार्थप्रकाशकाख्यं भाष्यंसमाप्तम्। शुभंभूयाच्छ्रीजानकीरामानन्यगतिकानाम् । एकोनविंशतिशताद्रुद्राधिकेसंवत्सरे ॥ हरिदासेनकृत मिदंभाष्यंतत्वप्रदीपकम् ॥ १ ॥ ऊर्जसितत्रयोदश्यां तस्मिन्नेवतुवत्सरे[1] ॥ श्रीसीतारामौजयताम् ॥ शुभंभूयात् ॥ श्रीरामचन्द्रार्पणमस्तु ( श्रीजानकीवल्लभायनमः॥ वासुदेवदासेनलिखितंभाष्यगुह्यकम् ॥ )

---

टि० (१) तुपुनः तस्मिन्नेववत्सरे रुद्राधिकएकोनविंशतिसंवत्सरे १९११ इत्यर्थः ॥

# ❀ शुद्धाशुद्धिपत्रम् ❀

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | १५ | भूतिलीला | भूतिर्लीला |
| २ | २३ | राहितत्वं | रहितत्वं |
| ५ | २० | इत्व | इत्य |
| ६ | ७ | पूर्व | पूर्वं |
| ,, | ६ | श्रूयेस | श्रूयेत |
| ,, | ११ | वक्त | वक्त् |
| ७ | ७ | नारायण | नारायणं |
| ,, | १३ | त्याद्या | त्याद्याः |
| ,, | १९ | लिङ्ग | लिङ्गं |
| ८ | ४ | तत्व | तत्वं |
| ,, | १३ | मंत्रा | मंत्राः |
| ९ | ११ | णिक्य | धिक्य |
| ,, | ७ | रामस्यै | रामस्यै |
| ११ | १४ | नतु | ननु |
| १२ | २ | गुणा | गुण |
| ,, | १३ | नन्द | नन्द |
| १३ | २६ | विष्णवादि | विष्णवादि |
| १४ | ११ | ओंकार | ओंकारं |
| ,, | ,, | मोंकार | मोंकार |
| १५ | ३ | पाप्मान | पाप्मानं |
| १६ | २५ | कुमारो | कुमार |
| १८ | १२ | समर्पयेति | समर्पयेदिति |

| पृ० | पं० | अशुद्ध | शुद्ध |
|---|---|---|---|
| ,, | २५ | योह | योऽहं |
| १६ | २२ | वाष्टि | वष्टि |
| १७ | १६ | धर्मिष्टा | धर्मिष्ठां |
| १८ | २ | तद्व श्यं | तद्व द्वश्यं |
| ,, | ७ | भ्युदित | भ्युदितं |
| ,, | ८ | विश्रुद्धे | विशुद्धे |
| ,, | २० | पद | पदै |
| २८ | १ | साक्ष | साक्षा |
| ,, | ५ | देष्टत्वा | देष्टृत्वा |
| ,, | ८ | तद्व ष्ट्वा | तद्व द्वष्ट्वा |
| ३० | ६ | दर्शन | दर्शनं |
| ,, | २५ | त्तित्व | त्तित्वं |
| ३४ | २४ | तस्मित्वतः | स्मितत्वतः |
| ३६ | ४ | सर्पःस्य | सर्पस्य |
| ,, | २५ | श्न | श्री |
| ३१ | ३ | भवतत्सुरैः | भवत्सुरैः |
| ४० | ११ | जाप्यवमु | जाप्यत्वमु |
| ,, | १३ | मत्रा | मंत्रा |
| ,, | २१ | वाच्चूया | वाच्यराम |
| ४६ | ३ | त्मकः | त्मकाः |
| | | नन्द्यास्य | नन्द्याख्या |
| ४७ | १२ | विवक्षतानि | विवक्षितानि |
| ,, | १४ | नामेभ्य | नामभ्य |
| ५१ | १४ | यस्मात्ता | यस्ता |
| ५२ | १४ | दुष्कृतं | दुष्कृत्यं |
| ५३ | ३ | सोवि | सवि |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ,, | १२ | निरपाप | निरपाय |
| ,, | १७ | न्नारदं | न्नारकं |
| ५४ | ६ | मुच्त्राटन | मुच्चाटनं |
| ५५ | ८ | प्रपच | प्रपञ्च |
| ,, | १४ | षड़पि | षड़पि |
| ५६ | ६ | तेजिष्टा | तेजिष्ठा |
| ५७ | २५ | मंत्रांश्चवेदांश्च | मंत्राश्चवेदाश्च |
| ५८ | १२ | मन्तर्माविं | मन्तर्भावि |
| ५६ | २५ | यमदग्नि | जमदग्नि |
| ६० | १६ | क्रापि | कापि |
| ,, | १७ | दोप | दोष |
| ६४ | १० | नन्नास्ति | तन्नास्ति |
| ,, | १८ | अन्यत्रभवःअत्यत्र त्यास्तान | अन्यत्रभवाः अत्यत्रत्यास्तान् |
| ,, | २३ | आदित्ययूपयोस्वरूप | आदित्ययूपयोः स्वरूप |
| ६८ | २१ | यानसा | मानसा |
| ७० | १० | भोगामिप | भोगामिष |
| ,, | १५ | कार्या | कार्यं |
| ७५ | ३ | अमृतमस्य | अमृतमयस्य |
| ७६ | १४ | ध्यायति | ध्यायति |
| ,, | २१ | तद्रूप | तद्रूप |
| ८२ | ७ | प्रतीकश | प्रतीकाश |
| ८३ | १० | मंडितःइति | मंडिइति |
| ८५ | ११ | तदप्ययुक्तं | तदप्युक्तं |
| ८७ | ६ | त्रिशेपित | विशेषित |

| पृ० | पं० | अशुद्ध | शुद्ध |
|---|---|---|---|
| ,, | १० | द्युक्तवा | द्युक्तत्वा |
| ८८ | २४ | पःम | परम |
| ९० | ३ | मगला | मंगला |
| ९२ | २१ | शिवश्य | शिवस्य |
| ९५ | १२ | रजहस्वा | पजहत्स्वा |
| ,, | १३ | दश्यत्वे | दृश्यत्वे |
| ९६ | ३ | विष्णुःपद | विष्णुपद |
| ९७ | ११ | द्वयोर्वि | द्वयोर्वि |
| ,, | २६ | विष्णु पदः | विष्णुपदः |
| ,, | ,, | ज्ञातव्य | ज्ञातव्यः ॥ |
| १०० | १३ | निशेध्रपरम | निषेध्रपरम |
| ,, | २२ | विभक्तिकोत | विभक्तिकस्त |
| ,, | २३ | य | यं |
| १०१ | २५ | तुष्णीं | तूष्णीं |
| १०२ | २७ | रामा। म्नो | रामनाम्नो |
| १०३ | १६ | नति | चेति |
| ,, | १९ | दाशरथेव | दाशरथेर्व |
| ,, | ,, | दृष्टत्वाद्दृष्ट | दृष्टत्वाददृष्ट |
| ,, | ,, | निःसंदेहत्वाद्दृष्ट | निःसंहत्वाद्दृष्ट |
| १०६ | १६ | तिर्य्यंच | तिर्य्यंचं |
| ,, | २४ | कश्चित | कश्चित् |
| ,, | ,, | मुर्ध्वंतिर्य्यंच | मूर्द्धंतिर्य्यंचं |
| १०७ | ३ | साक्षात्सदर्श | साक्षात्संदर्श |
| ११० | २१ | कर्तु | कर्तुं |
| १११ | १ | मशक्तः | ममशक्तः |
| ,, | १६ | साक्षाद्दृष्टा | साक्षाद्दृष्ट्वा |

| पृ० | पं० | अशुद्ध | शुद्ध |
|---|---|---|---|
| १२० | १३ | नरेंद्र | नरेन्द्र |
| ,, | १७ | कौशिल्या | कौशल्या |
| ,, | १६ | ब्राह्मणाणां | ब्राह्मणानां |
| ,, | २० | विंवातस्थ | विंवान्तःस्थ |
| १२१ | ६ | छिवद्यः | दुर्वद्यः |
| १२७ | ८ | बंशोऽवीर्य्य | बंशोऽपतोर्य्य |
| १२८ | ८ | घुभुजा | द्विभुजा |
| १२८ | १६ | जामदग्नि तपो | जामदग्नितपो |
| ,, | १६ | तदैव | तदैव |
| ,, | २० | संततम् | सन्ततम् |
| १२९ | ११ | ब्रह्मवस्था | ब्रह्मावस्था |
| १३५ | ३ | विमानैः | विमानैः |
| ,, | ७ | आर्त्तश्वर | आर्तस्वर |
| ,, | ११ | भ्रसं | भृशं |
| ,, | १८ | तथोक्त तस्तम | तथोक्तस्तम् |
| १३६ | २१ | तस्त्राकार्य | तस्तःकार्य |
| १३८ | १५ | रुण | उण् |
| १३७ | ७ | सब | सर्व |
| १३६ | १८ | उन | ऊन |
| ,, | २१ | छिनी | द्विनी |
| १४० | १ | विलाशो | विलासो |
| ,, | ४ | पद्ममा | पद्मा |
| ,, | ७ | क्षनः | क्षण |
| ,, | १० | पल्लवर्पण | पल्लवार्पण |
| ,, | २२ | मौल्य आभूषण | मौल्याभूषण |
| १४१ | ४ | व्याजन | व्याजेन |

| पृ० | पं० | अशुद्ध | शुद्ध |
|---|---|---|---|
| १४१ | ५ | समावृत्ताय | समावृताय |
| १४२ | १० | शाकं | साकं |
| ,, | १८ | श्री॥ | श्री |
| ,, | २० | ख्यातम् | व्याख्यातम् |
| ,, | २४ | क्रत | कृत |
| ,, | २५ | गोपाला। दन्येन | गोपालादन्येन |
| १४३ | २३ | तदकरणं तद्रुप | तदनुकरणं तद्रूप |
| १४७ | २५ | अंतरयामी | अन्तर्यामी |
| १४८ | २० | मनुदिताः | मनूदिता |
| १४८ | २३ | नामास्वाभाविकभार्य्याभाः | नामस्वाभाविकभार्य्याभा |
| १४६ | ४ | धम | धर्म |
| ,, | २५ | रित | रिति |
| १५० | २३ | तथवा | तथैवा |
| ,, | २६ | इद्रो | इन्द्रो |
| ,, | २७ | महेद्रं | महेन्द्र |
| ,, | ,, | त्रतुं | त्रातुं |
| ,, | ,, | वध्यम | वध्यम् |
| १५१ | १४ | कश्चितद | कश्चित्तद |
| ,, | १५ | कुय्यात् | कुर्य्यात् |
| ,, | १७ | ॥ ३७ ॥ | ॥ ३८ ॥ |
| १५२ | ११ | अविष्क्रत | आविष्कृत |
| ,, | २२ | मिति | निति |
| ,, | ,, | दर्धर्ष | दुर्धर्ष |
| १५३ | २२ | नादः | अनादः |
| १५४ | १६ | कच्चिचते | कच्चिचत्ते |
| १५५ | २ | विवाहित्वं | विवाहितत्वं |
| १५६ | ३ | मूनि | मुनि |
| १५६ | १५ | स्नपा | स्नुषा |

| पृ० | पं० | अशुद्ध | शुद्ध |
|---|---|---|---|
| १५६ | २२ | वह | वहु |
| १५७ | १४ | सौगधे | सौगंधे |
| ,, | २६ | पृष्ठा | पृष्टा |
| १५८ | ६ | शुभै | शुभैः |
| ,, | १६ | कच्चिते | कच्चिवस्ते |
| १५८ | २२ | ब्राह्मण | ब्राह्मण |
| ,, | २३ | वषक् | वषट् |
| ,, | ,, | गच्छिति | गच्छंति |
| १५८ | ८ | स्वनी | स्विनी |
| १५६ | २१ | तन्नूनत्व | तन्न्यूत्व |
| ,, | १८ | स्यथाः | स्यथ |
| १६० | ८ | मृत्यः | भृत्यः |
| ,, | ९ | कनन्यकाः | कन्यकाः |
| १६३ | २० | सत्संधं | सत्यसंधं |
| १६४ | १४ | श्रेठ | श्रेष्ठ |
| १६५ | १६ | प्रभावेन | प्रभावेण |
| १६८ | ३ | विरोधापति | विरोधापत्ति |
| १६६ | २० | स्वेष्ठ | स्वेष्ट |
| ,, | २६ | नुमंतं | हनुमंतं |
| १७१ | १५ | ध्येयवस्तु | धेयरैवस्तु |
| ,, | २४ | मतो | मत्तो |
| १७२ | ६ | येचेव | येचैव |
| ,, | २० | नित्युक्तत्वैक | नित्ययुक्तत्वैक |
| ,, | २४ | स्थितिप्रबृत्तियोः | स्थितिप्रवृत्योः |
| १७७ | १ | विंवतं | विंवितं |
| १८१ | २० | मम् | मम |
| ,, | २१ | यात्त | यात |
| ,, | २४ | मध्यये | मध्ये |
| १८२ | १० | गुणैव | गुणैः |

| पृ० | पं० | अशुद्ध | शुद्ध |
|---|---|---|---|
| ,, | २५ | निष्ठस्थित | निष्ठंस्थितं |
| ,, | ,, | मूल कारणत्वं | मूल कारणत्वं तस्य |
| १८४ | ५ | षराणां मंगा | पराणामंगा |
| १८५ | ७ | हिताद्यप | हिताद्युप |
| १८५ | १६ | स्वाभीष्ट | स्वाभीष्टं |
| ,, | १७ | वाक्येरुक्ता | वाक्यैरुक्ता |
| १९० | ६ | भगवत्प्रत्यानु | भगवत्प्रपत्त्यानु |
| ,, | २१ | सिद्धाचा | सिद्धयाच |
| १९१ | २२ | नुजायि | नुयायि |
| १९३ | ५ | मवेति | मेवेति |
| १९४ | १३ | धर्मिष्ठग्र | धर्मिष्ठाग्र |
| ,, | २१ | नृशस्या | नृशंस्या |
| ,, | २९ | वद्धांजलित्वस्यभावे | वद्धांजलित्वस्याभावे |
| १९८ | ३ | सव | सर्व |
| १९९ | ६ | गोत्र | गोत्रं |
| ,, | १६ | शेषण | शेषेण |
| ,, | १८ | द्विस्थाप | द्विःस्थाप |
| २०२ | ४ | एक्प | ऐक्यं |
| ,, | ६ | कतृत्व | कर्तृत्वं |
| २०३ | ११ | कीद्दृशतम् | कीद्दृशंतम् |
| ,, | २३ | पति | पत्ति |
| २०४ | ,, | माननां | मानना |
| ,, | ४ | मात्ट | मातृ |
| २०५ | ५ | दर्ष्ट्र | द्रष्ट्र |
| ,, | १० | विहारणे | विहारिणे |
| २०८ | १२ | यत्किंचित | यत्किंचित् |
| ,, | २५ | छेदना | छेदन |
| ,, | २६ | कर्ता | कर्तृ |